कविहृदयम् -

# कपिहस्तगतः मणिः

आघ्रातं परिलीढमुग्रनखरैः क्षुण्णं च यच्चर्वितम्
क्षिप्तं यद् बत नीरसत्वकुपितेनेति व्यथां मा कृथाः ।
हे सद्रत्न तवैतदेव कुशलं यद्वानरेणाग्रहात्
अन्तःसारविचारणव्यसनिना चूर्णीकृतं नाश्मना ॥

कश्चित् वानरः कदाचित् एकं रत्नं प्राप्नोत् । तादृशं वस्तु इतःपूर्वं न दृष्टम् आसीत् तेन वानरेण । वस्तुस्वरूपं ज्ञातुम् इच्छन् वानरः प्रथमं रत्नस्य आघ्राणं कृतवान् । जिह्वया रसं परीक्षितवान् । नखैः तस्य त्वचः मोचनार्थं यत्नं कृतवान् । दन्तैः दंशनप्रयत्नम् अपि कृतवान् सः । एवं बहुधा प्रयत्ने कृते अपि रत्नस्य सारवत्त्वं तेन न ज्ञातम् । अन्ते कुपितः सः रत्नं क्षिप्तवान् । वानरस्य एतादृशं कृत्यं दृष्ट्वा खिन्नं रत्नम् उद्दिश्य कविः वदति - ''हे रत्न ! वानरस्य एतादृशात् व्यवहारात् खिन्नः मा भवतु भवान् । अन्तः किम् अस्ति इति ज्ञातव्यम् इति उद्देशेन सः कपिः शिलाखण्डेन भवन्तं न चूर्णीकृतवान् यत् तत् भवतः सौभाग्यम्'' इति ।

जात्या कपिः रत्नमूल्यं कथं वा जानीयात् ? खादन- मात्रज्ञानवान् सः स्वयोग्यतानुगुणं रत्नपरीक्षां कृतवान् । तेन वानरेण यथा कृतं तथा बहुभिः क्रियते लोके ।

समाजसेवा, परोपकारः, सत्यवादिता इत्यादयः प्रशस्ताः गुणाः बहवः सन्ति । एते गुणाः यदि व्यक्त्या स्वव्यवहारे योज्यन्ते तर्हि जीवनं समृद्धं भवति । प्राचीनानां जीवनम् अत्र उदाहरणम् । किन्तु इदानीम् एतेषां गुणानां विषये जनाः किं चिन्तयन्ति ? 'एते गुणाः स्वायत्तीकृताः चेत् मम कीदृशः धनलाभः स्यात् ?', 'किम् एतेभ्यः मम पदवृद्धिः भवेत् ?', 'किम् एतैः अहं भोगसाधनं किमपि प्राप्तुं शक्नुयाम् ?', 'किम् एते गुणाः मम स्वार्थं पोषयन्ति ?' इत्येवं बहून् प्रश्नान् पृच्छन्ति । अर्थसम्बन्धमात्रं चिन्तयन्तः ते गुणान् तिरस्कुर्वन्ति । जीवनस्य अन्ते पुनः पश्चात्तापम् अनुभवन्ति - 'मम जीवनं समृद्धं न जातं, मम जीवनं तृप्तिकरं न जातम्' इति । भोगैकजीविनां पाश्चात्यानाम् अनुकरणं, परिश्रमे अनास्था इत्यादयः अवगुणाः मानवान् अर्थैकचिन्तने प्रवर्तयन्ति ।

वानरः रत्नं निस्सारं मत्वा क्षिप्तवान् आसीत् । किन्तु अधिकारमदमत्ताः, धनोन्मत्ताः केचन स्वेच्छाविहारिणः मणिसदृशानां सज्जनानां नाशने अपि प्रवृत्ताः दृश्यन्ते इति तु अहो दौर्भाग्यम् !

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!





# चन्दमामा

एप्रिल् - १९९५

*

## अन्तरङ्गम्



*

प्रतिकृतिमूल्यं - रू. ५.००
वार्षिकं ग्राहकशुल्कं - रू. ६०.००





# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## ज्ञानार्जनं नाम किम् ?

**प्रा**यः एतावति काले केचन च्छात्राः स्ववार्षिकीं परीक्षां लिखितवन्तः भवन्ति । अन्ये केचन परीक्षां लिखन्तः स्युः, अथवा वर्षस्य अन्तिमायाः प्रमुखपरीक्षायाः सम्मुखीकरणार्थं सिद्धतां कुर्वन्तः स्युः । अग्रिमकक्ष्यां प्रति छात्राणां प्रवेशावकाशस्य अर्हतायाः निर्णेत्री एषा एव परीक्षा ।

एषु दिनेषु प्रश्नः उदेति यत् - एकस्य वर्षस्य अवधौ छात्रैः वस्तुतः कियत् अधीतम् इति ज्ञातुम् एषा एव परीक्षा मापिका भवितुम् अर्हति वा ? वस्तुतः तस्य वर्षस्य लक्ष्यं किम् ? तैः किं साधितम् ? इति । सद्यःकाले सर्वकारपरतया कयाचित् अधिकृतसंस्थया एतम् एव विषयम् अधिकृत्य समीक्षा कृता । उन्नतकक्ष्यासु निम्नकक्ष्यासु च समानमानदण्डेन कृतया समीक्षया ज्ञातम् अस्ति - 'उन्नतकक्ष्यां ये प्रविशन्ति, तेषु ज्ञानवर्धनस्य प्रमाणं न्यूनं जातम् अस्ति । अपि च एतैः अध्ययने यावत् साधनीयम् आसीत्, तावत् न साधितम्' इति । एषा समीक्षा छात्रैः परीक्षा कथं लिखिता इति अंशं न अवलोकितवती ।

१९८९ तमे वर्षे एव एषा समीक्षा आरब्धा । विंशत्यधिकेषु राज्येषु वर्षत्रयस्य अपेक्षया अधिकं कालं यावत् ६०,००० छात्राणां समीक्षा कृता । एतस्याः समीक्षायाः परिणामांशानां साधारीकरणार्थं पुनरपि वर्षद्वयं यावत् कार्यं कृतम् । छात्राः प्रमुखपरीक्षासु मासिकपरीक्षासु च उत्तीर्णताप्राप्त्यर्थं यावत् आवश्यकं, तावतः एव विषयस्य सङ्ग्रहणं कुर्वन्ति, ततोऽपि अधिकं ज्ञातव्यम् इति विषये तेषां लक्ष्यं नास्ति इति विषयः स्पष्टप्रायम् । कक्ष्यासु अध्यापकाः यत् पाठयन्ति, पाठ्यपुस्तकेषु ये च विषयाः सन्ति, तान् केवलं पठन्ति छात्राः । ततोऽपि अधिकं ज्ञातुं प्रयत्नम् अपि न कुर्वन्ति । नगरवासिनः छात्राः स्वसमानवयस्कानाम् ग्रामीणच्छात्राणाम् अपेक्षया अपि अधिकज्ञानवन्तः भवन्ति इत्यपि समीक्षया ज्ञातः अंशः । ज्ञानार्जनविषये बालकानां बालिकानां च मध्ये अपि वैपरीत्यं दृश्यते । आश्चर्यं नाम बहुषु राज्येषु बालिकाः एव अध्ययनविषये बालकानाम् अपेक्षया अपि उत्सुकाः सन्ति, तासां बुद्धिशक्तिः अपि बालकानाम् अपेक्षया तीक्ष्णा अस्ति इति विषयः ज्ञातः अस्ति । एतस्याः समीक्षायाः फलितांशस्य अभिप्रायः अस्ति यत् - अध्यापकाः कियता प्रमाणेन स्वज्ञानं छात्रान् बोधयन्ति इति अवलम्ब्य अस्ति छात्राणां ज्ञानवृद्धिः इति ।


सम्पुटः - १२ एप्रिल् - १९९५ सञ्चिका - १

प्रतिकृतिमूल्यं - रू. ५.०० • वार्षिकं ग्राहकशुल्कं - रू. ६०.००






# नामनिर्वचनम् - २१

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।]*

**प्रकाशः -** प्रकाशते इति प्रकाशः । [प्र + काशृ (दीप्तौ) + अच्] भावार्थकेन प्रत्ययेन (घञ्) युक्तस्य प्रकाशशब्दस्य कान्तिः इति अर्थः । किन्तु अत्र कान्तिमान् इति अर्थः । कीर्तिमान्, प्रसिद्धिमान् इत्यपि अर्थः अस्ति एतस्यैव ।

**मुरलीधरः -** धरति इति धरः । [धृ + अच्] मुरल्याः धरः मुरलीधरः । मुरली नाम वेणुनामकः वाद्यविशेषः । तां मुरलीं धृतवान् अस्ति कृष्णः । अतः मुरलीधरः नाम कृष्णः ।

'मुरलीं धरतीति मुरलीधरः' इति व्युत्पत्तिः तु अयुक्ता । यतः मुरली इति उपपदे सति 'कर्मण्यण्' इति अण्प्रत्ययः स्यात् । ततश्च मुरलीधारः इति रूपं भवेत् । अच्प्रत्यये तावत् 'धरः' इति रूपं भवति । किन्तु तदा उपपदं किमपि न भवेत् । अतः धरतीति धरः इति उक्त्वा, मुरल्याः धरः = मुरलीधरः इति समासः करणीयः । सिद्धान्तकौमुद्यां 'गङ्गाधरः' इत्यस्य विवरणसन्दर्भे एतत्सम्बद्धाः अंशाः उक्ताः सन्ति ।

**धर्मराजः -** i) धर्मेण राजते इति धर्मराजः । [धर्म + राजृ (दीप्तौ) + अच्]

ii) धर्मश्चासौ राजा च । [धर्म + राजा + टच्]

धर्मकार्येण यश्च प्रकाशते, यः धर्ममार्गेण राज्यं पालयति सः धर्मराजः इति उच्यते । पाण्डुसुतः धर्मराजः लोके सुविख्यातः । भगवान् बुद्धः अपि धर्मराजः इति उच्यते । तथा हि कोषः - 'सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः' इति ।

**शुभा -** शुभम् अस्याः अस्ति इति शुभा । [शुभ + अच् (पचादिः)] या विशेषेण शोभायुक्ता भवति सा इति तात्पर्यम् । कान्तिः, सौन्दर्यम् इत्यादयः अन्ये अपि अर्थाः सन्ति एतस्य पदस्यैव ।

---

**सूचना -** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

**सङ्केतः** - संस्कृतचन्दमामा, 'अक्षरम्', ८ क्रास्, गिरिनगरं, II फेस्, बेङ्गलूरु - ५६० ०८५

वार्ताविशेषः -

# सहस्रदिनानां युद्धं समाप्तम्

बोस्नियाहेर्ज्गोविनार्नगरे नूतनवर्षस्य आगमन-सूचकः चर्च्घण्टानिनादः न श्रुतः, अपि तु भीकरः भुषुण्डिशब्दः श्रुतः । केभ्यश्चित् वर्षेभ्यः एषः सामान्यविषयः आसीत् इति कारणतः भुषुण्डिशब्दस्य श्रवणात् अपि तत्रत्याः जनाः न आश्चर्यचकिताः । किन्तु अनन्तरदिनेषु भुषुण्डिशब्दः स्थगितः अभवत् । एतस्मात् प्रजाः अतीव सन्तुष्टाः । युगोस्लोवियाफेडरेषनतः स्लोवेनिया-क्रोषिया-मेसिडोनिया-गणतन्त्रराज्यानि दूरं गतानि । तदा बोस्नियाहेर्ज्गोविनार् अपि दूरं गतम् । तस्मात् कारणात् मासत्रयात्पूर्वं युद्धम् आरब्धम् । सद्यःकाले तु सेर्बिया माण्टिनिग्रो च केवलं युगोस्लोवियाफेडरेषन् मध्ये स्तः ।

मेसिडोनियां विहाय अन्येषु त्रिषु गणतन्त्रराज्येषु अपि हिंसात्मकाः घटनाः अनुवर्तमानाः एव सन्ति । युगोस्लोविया फेडरेषन् सैन्ये सेर्ब्जनाः अधिकसंख्याकाः सन्ति । बोस्नियाहेर्ज्गोविनार्राज्ये ३३ मासान् यावत् घोरं युद्धं प्रवृत्तम् । विश्वस्य द्वितीययुद्धस्य अनन्तरं-तत्राम १९४५ वर्षस्य अनन्तरं-युरोप्देशे सुदीर्घकालं प्रवृत्तं युद्धं नाम एतदेव ।

सेर्ब्जनाः बहुसंख्याकैः यवनैः सह अल्पसंख्याकैः क्रोषियन्जनैः सह च संघर्षं कुर्वन्तः सन्ति । सेर्ब्जनाः राजधान्याः सराजीवुनगरस्य विमानकेन्द्रं स्वायत्ती-कृतवन्तः । अनन्तरं च विश्व-संस्थाशान्तिपालना-केन्द्राणि स्वकर्तव्यं निर्वोढुम् अशक्तानि अभवन् । आक्रमणं प्राप्तवद्भ्यः नगरेभ्यः अत्यावश्यकवस्तूनां व्यवस्थाकरणम् अपि अशक्यम् अभवत् ।

अमेरिका, रष्या, फ्रान्स्, जर्मनि, ब्रिटन् - एते पञ्च देशाः सम्भूय काञ्चित् समितिम् आयोज्य कानिचन शान्तिसूत्राणि सूचितवन्तः । किन्तु येषु पक्षेषु संघर्षः प्रचलति स्म, ते पक्षाः एतानि शान्तिसूत्राणि तिरस्कृतवन्तः । एतद्विषये महती चर्चा प्रवृत्ता । अन्ते ४९% प्रदेशाः सेर्ब्जनेभ्यः दातव्याः, इतरे प्रदेशाः च अन्येभ्यः वितारणीयाः इति पञ्चदेशानां समित्या या सूचना दत्ता, तां सूचनां यवनाः अङ्गीकृतवन्तः । एतं विषयं क्रोट्जनाः अपि अङ्गीकृतवन्तः ।

तस्मिन् एव समये विश्वसंस्थायाः शान्तिपालनासैन्यपरतया गतान् अमेरिकासैनिकान् सेर्ब्जनाः घातितवन्तः । एतस्मात् कुपितः अमेरिकादेशः - 'बोस्नियानगरं प्रति आयुधानां व्यवस्था क्रियते मया' इति भयम् उत्पादितवान् । तदा सेर्ब्जनाः अमेरिकादेशस्य भूतपूर्वाध्यक्षस्य जिम्मिकार्टर्वर्यस्य साहाय्यं प्रार्थितवन्तः । जिम्मिकार्टर्वर्यः इतःपूर्वम् एव अमेरिका-उत्तरकोरिया-संघर्षं, हैटिदेशस्य आन्तरिक-युद्धानां स्थगनं च शान्तिसन्धानपूर्वकं कृत्वा प्रसिद्धिं प्राप्तवान् अस्ति ।

कार्टर्वर्यः यवननायकैः सह, सेर्ब्नायकैः सह च समालोचनं कृत्वा तान् प्रार्थितवान् अस्ति यत् - पञ्चदेशैः सूचितानि शान्तिसूत्राणि अङ्गीकुर्वन्तु इति । समालोचनानन्तरं, तत्राम डिसेम्बर्मासस्य ३१ दिनाङ्के, उभौ अपि पक्षौ चतुर्णां मासानां संघर्षं स्थगितवन्तौ । अपि च ताभ्याम् अङ्गीकृतम् अस्ति - मे-मासात् पूर्वम् अन्तिमनिर्णयः भवेत्, तदर्थं च समालोचनं करणीयम् इति । एवं सामान्यतः सहस्रं दिनानि यावत् प्रवृत्तस्य संघर्षस्य अनन्तरं बोस्नियाप्रदेशे शान्तिस्थापनार्थम् अनुकूला परिस्थितिः निर्मिता अस्ति ।





# साहसी वीरेशः

वीरेशः स्वग्रामस्थायाम् गौर्याम् अनुरक्तः आसीत्, ताम् एव परिणेतुम् इच्छति स्म च । किन्तु गौर्या वीरेशः उक्तः आसीत् - 'वज्रनिर्मितः कण्ठहारः आवश्यकः' इति । वज्रस्य कण्ठहारार्थं सहस्रं रूप्यकाणि आवश्यकानि । तावत् धनं वीरेशस्य सकाशे न आसीत् ।

अधिकधनसम्पादनयोग्यानि कार्याणि कर्तुं वीरेशः असमर्थः आसीत् । अतः सः पाककार्यं ज्ञात्वा गृहं गृहं गत्वा शाककर्तनं, पेषणं च करोति स्म । पाककार्यम् अपि करोति स्म सः । ततः प्राप्यमाणेन धनेन वीरेशस्य जीवननिर्वहणं भवति स्म । अतः सः धनसञ्चयं कर्तुं न शक्तवान् आसीत् ।

कदाचित् तस्य देशस्य राजा प्रकटनं कारितवान् यत् - यः महत् साहसकार्यं करोति, तस्मै दशसहस्रं रूप्यकाणि दीयन्ते मया इति ।

एतत् श्रुत्वा वीरेशः चिन्तितवान् - मया अपि किमपि साहसकार्यं करणीयम् इति । किन्तु सः मण्डूकात् अपि भीतः भवति स्म । अतः एव सः कृषिकार्यम् अपि न करोति स्म । तादृशः धैर्यविहीनः कथं वा साहसकार्यं कुर्यात् ? तद्ग्रामीणः वृद्धः रामनाथः बहून् उपायान् जानाति स्म । अतः वीरेशः रामनाथसमीपं गत्वा तम् उक्तवान् - 'साहसकार्यं किमपि कर्तुम् इच्छामि अहम् । अतः कृपया कमपि उपायं सूचयतु भवान्' इति ।

वीरेशस्य स्वभावं सम्यक् जानन् रामनाथः उक्तवान् - "भयं नाम मनुष्यस्य कश्चन रोगः एव । मानवः धैर्यवान् भवेत् । यस्य धैर्यं नास्ति, सः धैर्यप्राप्त्यर्थम् औषधं स्वीकुर्यात् । धैर्यवन्तः साहसकार्याणि अपि सुलभतया कुर्वन्ति । भवान् धैर्यप्राप्त्यर्थं चन्द्रपुरं गच्छतु । चन्द्रपुरस्थायां पर्वतगुहायां

कश्चित् संन्यासी निवसति । तस्य समीपे भयनिवारिकाः मूलिकाः सन्ति'' इति ।

एतत् श्रुत्वा अतीव सन्तुष्टः वीरेशः ततः गत्वा गौरीं मिलित्वा रामनाथेन उक्तं सर्वम् उक्त्वा - ''भवत्याः निमित्तम् अहं चन्द्रपुरं गच्छन् अस्मि । तत्र अहं भयात् मुक्तिं सम्पाद्य ततः राजधानीं गमिष्यामि । तत्र च साहसकार्यं कृत्वा, धनं सम्पाद्य भवत्यै वज्रमयं कण्ठहारम् आनेष्यामि'' इति उक्तवान् ।

तदा गौरी मन्दहासपूर्वकम् उक्तवती - ''इदानीम् अपि भवान् न प्रस्थितः । नारायणः तदा एव राजधानीं गतवान् । यदि नारायणः भवतः अपेक्षया पूर्वम् एव वज्रहारं स्वीकृत्य आगमिष्यति, तर्हि अहं तम् एव परिणेष्यामि'' इति ।

नारायणः अपि गौरीम् इच्छति । सः यद्यपि वीरेशः इव न सुन्दरः, तथापि सः साहसी । सः सर्पम् अपि धैर्येण गृह्णाति । मध्यरात्रसमये अपि पिशाचवासस्थानादिषु निर्भीकतया शयनं कर्तुं समर्थः । तादृशेन सह स्पर्धां कुर्वन् अहं जयं प्राप्नुयां वा इति चिन्तयन् एव वीरेशः दृढसङ्कल्पं कृत्वा चन्द्रपुरं गतवान्, संन्यासिनं दृष्टवान् च । संन्यासी वीरेशस्य समस्यां श्रुत्वा उक्तवान् - ''भयनिवारिकाः मूलिकाः पार्श्वगुहायां सन्ति । गत्वा स्वीकरोतु भवान्'' इति ।

वीरेशः गुहायाः द्वारसमीपं गतवान् । तत्र मण्डूकानां रवः श्रूयते स्म । तस्मात् भीतः वीरेशः प्रत्यागत्य संन्यासिनं - ''गुहायाः



अन्तः बहवः मण्डूकाः सन्ति । अतः अहं कथम् अन्तः गच्छानि ?'' इति पृष्टवान् ।

''सर्पाः चेत् दशेयुः इति भयं सहजम् । किन्तु मण्डूकाः न दशन्ति खलु ! अतः निर्भयेन तत्र गत्वा मूलिकाम् आनयतु भवान्'' इति उक्तवान् सन्यासी ।

तदा वीरेशः - ''स्वामिन् ! कृपया भवान् एव तां मूलिकाम् आनीय ददातु, येन अहं भवतः उपकारम् आजीवनं स्मरेयम्'' इति संन्यासिनं प्रार्थितवान् ।

तदा संन्यासी उक्तवान् - ''भवान् स्वयं गत्वा आनयति चेत् एव मूलिका उपयोगाय भवति'' इति ।

''एवं तर्हि मम भाग्यं नास्ति'' इति वदन् वीरेशः ततः प्रतिगतवान् । मध्येमार्गं कश्चित्



अश्वशकटः लब्धः । तत्प्रदेशस्य प्रसिद्धस्य मल्लस्य नञ्जुण्डस्य पुत्री इन्दुमती तेन शकटेन प्रयाणं कुर्वती आसीत् । सा वीरेशं दृष्ट्वा शकटं स्थगितवती । इन्दुमती छलवादिनी, अहम्भाववती चापि । अतः एव तस्याः विवाहः न जातः आसीत् । तेन च तस्याः पिता महत् कष्टम् अनुभवन् आसीत् ।

इन्दुमती वीरेशं दृष्ट्वा उक्तवती - "अहो ! अपूर्वं सौन्दर्यं भवतः । अहं मल्लस्य नञ्जुण्डस्य पुत्री । अहं भवन्तं परिणेतुम् इच्छामि" इति ।

तदा वीरेशः उक्तवान् - "अहं मद्ग्रामीणाम् एव गौरीम् इष्टवान् अस्मि । तां विना अन्यां न परिणेष्यामि" इति ।

इन्दुमती गौर्याः पूर्वापरं वीरेशतः एव ज्ञात्वा महता कोपेन - "सा गौरी निर्धनकुलोत्पन्ना । अहं तु प्रसिद्धस्य मल्लस्य पुत्री अस्मि । मां तिरस्कृत्य गौरीम् एव परिणेष्यति वा भवान् ?" इति पृष्टवती ।

वीरेशः अङ्गीकारपूर्वकं शिरः चालितवान् । तावता शकटात् तैलपः कश्चित् वीरेशस्य उपरि पतितः । एतस्मात् भीतः वीरेशः उच्चैः क्रन्दनं कृतवान् । वीरेशस्य एतेन व्यवहारेण 'एषः महान् भीरुः' इति ज्ञात्वा इन्दुमती - "भवान् मां न परिणेष्यति चेत् अहं भवन्तं तैलपप्रकोष्टे स्थापयिष्यामि" इति भायितवती ।

एतत् श्रुत्वा वीरेशः भीत्या ततः धावितवान् । इन्दुमती अपि शकटद्वारा तम् अनुसृतवती । तस्मिन् समये नारायणः शकटस्य अभिमुखम् आगच्छन् इन्दुमतीं पृष्टवान् - "किमिदम् अन्याय्यम् ? किमर्थं भवती वीरेशम् अनुसरन्ती अस्ति ?" इति ।

इन्दुमती प्रवृत्तं सर्वं नारायणं निवेदितवती ।

तदा नारायणः उक्तवान् - "वीरेशः तैलपात् मण्डूकात् चापि भीतः भवति । भवती तु प्रसिद्धस्य मल्लस्य पुत्री । धैर्यवती भवती किमर्थं वीरेशं परिणेतुम् इच्छति? एतादृशः धैर्यविहीनः वीरेशः नञ्जुण्डस्य जामाता यदि भविष्यति, तर्हि जनाः उपहसेयुः किल !" इति ।

"भवतः वचनम् अपि युक्तम् एव । एवं तर्हि अहं कञ्चित् साहसिपुरुषं परिणेष्यामि । सौन्दर्यं दूरे तिष्ठतु नाम" इति वदन्ती इन्दुमती

शकटं परिवर्त्य ततः निर्गतवती ।

'अपायात् रक्षितः' इति अतीव सन्तुष्टः वीरेशः नारायणाय कृतज्ञतां समर्प्य तं पृष्टवान् - "भवान् राजधानीं गत्वा कीदृशं साहसकार्यं कृतवान् ?" इति ।

तदा नारायणः गर्वेण - "अहं जले युगपत् एव मकरद्वयं जितवान् । तस्मात् राजा मह्यं दशसहस्रं रूप्यकाणि दत्तवान् । तेन धनेन एकं वज्रहारं क्रीतवान् अहम् । इतःपरं ग्रामं गत्वा गौरीं परिणेष्यामि" इति यावत् वदन् आसीत्, तावता ताभ्यां यस्य वृक्षस्य अधः स्थितम् आसीत्, तस्मात् वृक्षात् तयोः उपरि जालं किञ्चन पतितम् । तौ जालात् बहिः आगन्तुं प्रयतमानौ आस्ताम् । तावता चत्वारः चोराः वृक्षतः अधः आगत्य नारायणतः कण्ठहारं बलात् स्वीकृत्य ततः पलायिताः ।

किञ्चित्कालानन्तरं वीरेशः नारायणः च जालात् बहिः आगतवन्तौ । नारायणः वीरेशं - "अहम् इदानीम् एव गत्वा तान् चोरान् गृहीत्वा मदीयं वज्रहारम् आनेष्यामि । तावता भवान् ग्रामं गत्वा मम आगमनवार्तां गौरीं सूचयतु" इति उक्त्वा ततः गतवान् ।

ततः विरेशः स्वग्रामं गत्वा प्रवृत्तं सर्वं गौरीं निवेदितवान् ।

एतत् श्रुत्वा गौरी - "चतुरः चोरान् ग्रहीतुं नारायणः एकः एव गतवान् वा ? एवं तर्हि तस्य धैर्यं तु प्रशंसार्हम् एव" इति उक्तवती ।



'नारायणः इदानीं वज्रहारम् आनेष्यति । ताम् एव परिणेष्यति गौरी । तत्पूर्वं स्वाभिप्रायः प्रकटनीयः' इति विचिन्त्य वीरेशः धैर्येण गौरीम् उक्तवान् - "वस्तुतः विवाहस्य वज्रहारस्य च कः सम्बन्धः ? भवती धनम् इच्छति, उत प्रीतिम् ? अहं तु वज्रहारम् आनेतुं न शक्तः । किन्तु अहं भवत्यां नितराम् अनुरक्तः अस्मि । अतः भवती माम् एव परिणयतु" इति ।

एतत् श्रुत्वा गौरी मन्दहासपूर्वकम् उक्तवती - "ममापि भवति अनुरागः अस्ति एव । किन्तु एतत् एव वचनं यदि पूर्वम् एव भवान् धैर्येण माम् उक्तवान् स्यात्, तर्हि अहं विवाहम् अङ्गीकृतवती स्याम् । भवतु, इदानीं वा धैर्येण भवता उक्तं खलु ! अतः भवन्तम्

एव परिणेष्यामि अहम्'' इति।

एतस्मात् वीरेशः अतीव सन्तुष्टः। तावता नारायणः वज्रहारं स्वीकृत्य तत्र आगतवान्। गौरी नारायणम् उक्तवती - ''भवता कर्तुम् अशक्तं साहसकार्यं वीरेशेन साधितम् अस्ति। अतः अहं वीरेशम् एव परिणेष्यामि'' इति।

एतत् श्रुत्वा नारायणः आश्चर्येण पृष्टवान् - ''सः वीरेशः मण्डूकात् अपि भीतः भवति। तादृशः कीदृशं साहसकार्यं कृतवान्?'' इति।

तदा गौरी उक्तवती - ''साहसं नाम केवलं खड्गं गृहीत्वा युद्धकरणं न। मकरैः सह सङ्घर्षः अपि न। मनसि यत् अस्ति तत् धैर्येण वक्तव्यम्। वीरेशः मम निमित्तं मल्लस्य पुत्रीम् अपि धैर्येण तिरस्कृतवान्। तस्मात् महान् अपायः अभविष्यत्। स्वपुत्रीं तिरस्कृतवन्तं वीरेशं मल्लः नञ्जुण्डः सम्यक् अताडयिष्यत्। इदानीम् आवयोः विवाहविषये धैर्येण स्वकीयं मनोभावं प्रकटीकृतवान् वीरेशः। वस्तुतः प्रेमविवाहस्य नियमाः एव न भवेयुः'' इति।

नारायणः गौर्याः वचनम् अङ्गीकुर्वन् उक्तवान् - ''भवत्याः कथनं युक्तम् एव अस्ति। सर्वदा अहं साहसकार्याणि कर्तुम् इच्छामि। सर्वे मद्विषये गौरवेण सम्भाषणं कुर्युः इति भावेन अहं राजधानीं गत्वा वज्रहारं कीतवान्। मल्लस्य पुत्र्याः इन्दुमत्याः सौन्दर्येण अहम् आकृष्टः अभवम्। 'साहसपुरुषं परिणेष्यामि' इति यदा तया उक्तं, तदा तस्याः विषये मम आशा उत्पन्ना। किन्तु मम मनोभावं धैर्येण तां वक्तुं न शक्तवान् अहम्। अतः ममापेक्षया वीरेशः एव वस्तुतः साहसी'' इति।

एतत् श्रुत्वा सन्तुष्टः वीरेशः उक्तवान् - ''अहम् अपि साहसी इति भवता अङ्गीकृतं खलु! भवतु। मल्लस्य पुत्र्याः इन्दुमत्याः परिणयार्थम् अहं भवतः साहाय्यं करिष्यामि'' इति।

अनन्तरं केषुचित् एव दिनेषु इन्दुमती-नारायणयोः, गौरी-वीरेशयोः च विवाहौ सम्पन्नौ।





# मत्स्यग्रहणम्

कार्यनिमित्तं नगरं प्रति प्रस्थितः आसीत् चन्द्रशेखरः । मध्येमार्गं तेन किञ्चन दृश्यं दृष्टम् । कौचित् द्वौ तटाकतीरे स्थित्वा हस्तेन दर्पणं गृहीत्वा दर्पणे प्रतिफलिताः सूर्यकिरणाः तटाकजले यथा पतेयुः तथा कुर्वन्तौ आस्ताम् । किमर्थं तौ तथा कुर्वन्तौ स्तः इति ज्ञातुम् इच्छन् चन्द्रशेखरः तटाकतीरं गतवान् । तटाकतीरे स्थितयोः अन्यतमः चन्द्रशेखरग्रामीणः कृष्णकान्तः एव आसीत् । अपरः दृढकायः आसीत् । दर्शनेन सः नगरवासी इव भासते स्म । चन्द्रशेखरः तयोः समीपं गत्वा पृष्टवान् - ''भवद्भ्यां किं क्रियमाणम् अस्ति ? विचित्रं दृश्यते खलु !'' इति ।

तदा नगरवासी उक्तवान् - ''आवां मत्स्यग्रहणार्थं प्रयतमानौ स्वः'' इति ।

एतत् श्रुत्वा आश्चर्यचकितः चन्द्रशेखरः - ''अहं जालद्वारा मत्स्यग्रहणं दृष्टवान् अस्मि । बडिशद्वारा मत्स्यग्रहणम् अपि मया दृष्टम् अस्ति । किन्तु एवंप्रकारेण मत्स्यग्रहणं कदापि न दृष्टं खलु !'' इति उक्तवान् ।

तदा नगरवासी उक्तवान् - ''एषा मत्स्यग्रहणयुक्तिः'' इति ।

''एवं तर्हि मत्स्यग्रहणं केन प्रकारेण क्रियते ?'' इति पृष्टवान् चन्द्रशेखरः ।

तदा नगरवासी कोपेन उक्तवान् - ''परम्परागताम् एतां विद्यां भवन्तं निश्शुल्कं पाठयितुं न मूर्खः अहम् । यदि भवान् एतत् रहस्यं ज्ञातुम् इच्छति, तर्हि मह्यं पञ्चाशत् रूप्यकाणि ददातु'' इति ।

अनुक्षणं चन्द्रशेखरः पञ्चाशत् रूप्यकाणि नगरवासिने दत्तवान् । नगरवासी धनं स्वीकृत्य चन्द्रशेखरम् उक्तवान् - ''विशेषता तु एतस्य दर्पणस्य एव । स्थिरम् एकत्र स्थित्वा, सूर्यस्य प्रकाशः दर्पणे प्रतिफलितः सन् तटाकजले एकत्र एव यथा पतेत्, तथा

करणीयम् । तदा मत्स्याः आतपकारणात् स्मृतिविहीनाः सन्तः जले प्लवन्ते । अनन्तरं ते मत्स्याः अस्माभिः ग्रहीतव्याः'' इति ।

एतत् श्रुत्वा चन्द्रशेखरः नगरवासिनं सन्देहेन पश्यन् पृष्टवान् - ''एतावत्पर्यन्तं भवता कति मत्स्याः गृहीताः ?'' इति ।

तदा नगरवासी हसन् उक्तवान् - ''भवन्तम् अपि अविहाय षट्'' इति ।

एतत् श्रुत्वा ''वञ्चना, महती वञ्चना'' इति कोलाहलं कृतवान् चन्द्रशेखरः ।

तदा नगरवासी - ''अयि भोः ! वृथा कोलाहलकरणेन न किमपि प्रयोजनम् । भवादृशः अन्यः कश्चित् यावत् अत्र न आगमिष्यति, तावत्पर्यन्तम् अत्रैव मया सह दर्पणं गृहीत्वा तिष्ठति चेत् पञ्चविंशति रूप्यकाणि प्रत्यर्पयिष्यामि । एतत् भवता अनुमतं वा ?'' इति पृच्छन् तावत्पर्यन्तम् अपि तत्र स्थितवते कृष्णकान्ताय पञ्चविंशति रूप्यकाणि दत्तवान् ।

चन्द्रशेखरः नगरवासिना सह स्थित्वा दर्पणं गृहीतवान् आसीत् । अर्धघण्टा अतीता । तटाकतीरस्य अपरपार्श्वात् कृष्णकान्तः आगच्छन् आसीत् । तेन सह अन्ये चत्वारः आसन् । सर्वेषाम् अपि हस्ते दण्डाः आसन् ।

तान् दृष्ट्वा नगरवासी महता सन्तोषेण - ''मत्तः मत्स्यग्रहणरहस्यं ज्ञात्वा गतः सः अन्यान् आनयन् अस्ति । ते अपि मत्स्यग्रहणरहस्यं ज्ञातुम् इच्छन्ति इति भाति । किन्तु ते किमर्थं दण्डं गृहीत्वा आगच्छन्तः स्युः ?'' इति वदन् सन्देहं प्रकटितवान् ।

तदा चन्द्रशेखरः उच्चैः हसन् उक्तवान् - ''ते प्रायशः दण्डग्रहणविद्यां भवन्तं पाठयितुम् आगच्छन्तः स्युः । किन्तु ते भवतः हस्तौ पादौ भञ्जयन्ति चेत् भवान् नगरं प्रति कथं गच्छेत् इति मम चिन्ता'' इति ।

एतत् श्रुत्वा भीतः नगरवासी कृष्णकान्तात्, चन्द्रशेखरात् च स्वीकृतस्य धनस्य अपेक्षया अपि किञ्चित् अधिकं धनं चन्द्रशेखराय दत्त्वा ततः नगरं प्रति धावितवान् ।






(ट्रायराजस्य पुत्रेण मोहनेन भुवनसुन्दरी अपहृता इति कारणतः ग्रीकृजनाःससैन्यम् आगत्य ट्रायनगरस्य उपरि आक्रमणं कृतवन्तः। प्रथमे दिने प्रवृत्ते युद्धे ट्रायजनाः ग्रीकृजनैः ताडिताः सन्तः स्वनगरं प्रति पलायिताः। अनन्तरं ग्रीकृजनाः ट्रायनगरस्य पार्श्वनगराणाम् उपरि आक्रमणं कुर्वन्तः सर्वत्र लुण्ठनम् आरब्धवन्तः। ग्रीकृजनैः ट्रायनगरस्य उपरि कृतम् आक्रमणं नव वर्षाणि यावत् प्राचलत्। एतस्मिन् अवधौ घोरं युद्धं न प्रवृत्तं चेदपि ग्रीकृशिबिरे अन्यत्र चापि कानिचन दुष्कृत्यानि प्रवृत्तानि। अनन्तरम् ......)

ट्रायनगरस्य उपरि ग्रीकृजनैः कृतम् आक्रमणं नव वर्षाणि यावत् प्राचलत्। अत्रान्तरे शैत्यकालः सम्प्राप्तः। शैत्यकाले युद्धकरणं महते क्लेशाय। अतः ग्रीकृजनाः एतेषु दिनेषु धनुर्विद्यायां प्रावीण्यं सम्पादयन्तः कालं यापयन्ति स्म।

युद्धभूमेः अनतिदूरे एव कश्चन सूर्यदेवालयः अस्ति। एषः देवालयः ट्रायनगरस्य ग्रीकृजनानां शिबिरस्थानस्य च मध्ये आसीत्। सूर्यदेवाय बलिदानार्थं ग्रीकृजनाः ट्रायजनाः चापि सूर्यदेवालयं गच्छन्ति स्म। ट्रायनगरस्य केचन प्रमुखाः ग्रीकृजनैः तदा तदा सूर्यदेवालये दृश्यन्ते स्म।

कदाचित् वक्रकायः बलिदानार्थं सूर्यदेवालयं गतवान् आसीत्। तदा तत्र सः वर्धनस्य पत्नीं पुत्रीं च दृष्टवान्। ते अपि सूर्याय बलिदानार्थम् आगतवत्यौ आस्ताम्।



वज्रकायः वीरसिंहस्य एतान् नियमान् अङ्गीकर्तुं न इष्टवान्। एतावता शैत्यकालः अपगतः, वसन्तकालः च सम्प्राप्तः। अतः पुनरपि युद्धम् आरब्धम्। युद्धे केनापि प्रकारेण वीरसिंहः मेलनीयः इति वज्रकायः बहुधा यत्नं कृतवान्। किन्तु सः यत्नः सफलः न जातः।

कदाचित् वीरसिंहस्य मेलनार्थं वज्रकायः प्रस्थितवान् आसीत्। तावता वीरसिंहस्य अनुजः वज्रकायस्य हस्तं लक्ष्यीकृत्य बाणप्रयोगं कृतवान्। तेन वज्रकायः व्रणितः अभवत्।

ट्रायजनेषु एव दैवानुग्रहः अस्ति इति भासते स्म। यतः युद्धे जयस्य आधिक्यं ट्रायजनानाम् एव आसीत्।

वज्रकायः यदा ट्रायनगरं परितः विद्यमानानि नगराणि लुण्ठितवान्, तदा काश्चन स्त्रियः दासीत्वेन तेन प्राप्ताः। तासु हेमानामिका भामिनीनामिका च आस्ताम्। यदा प्राप्तानां महिलानां विभागः कृतः तदा चक्रवर्तिना हेमा प्राप्ता, वज्रकायेन च भामिनी प्राप्ता।

हेमायाः पितुः नाम हेमाम्बरः। हेमाम्बरः सूर्योपासकः आसीत्। सः ग्रीक्जनेभ्यः पुत्री प्रत्यानेतव्या इति उद्देशेन चक्रवर्तिने कानिचन उपायनानि समर्प्य तं प्रार्थितवान् यत् - मम पुत्रीं हेमां कृपया प्रत्यर्पयतु भवान् इति।

किन्तु चक्रवर्ती हेमाम्बरस्य वचनं न अङ्गीकृतवान्। तेन दत्तानि उपायनानि अपि

वर्धनस्य पुत्री प्रमोदिनी अतीव सुन्दरी। तस्याः दर्शनमात्रेण वज्रकायः तस्याम् अनुरक्तः जातः। ततः वज्रकायः स्वशिबिरं प्रतिनिवृत्य कस्यचित् दूतस्य द्वारा वीरसिंहाय वार्तां प्रेषितवान् यत् - अहं भवतः भगिनीं प्रमोदिनीं परिणेतुम् इच्छामि इति।

एतस्य उत्तररूपेण वीरसिंहः वज्रकायाय वार्तां प्रेषितवान् - "भवान् ग्रीक्पक्षं परित्यज्य अस्माकं पक्षं यदि आगमिष्यति, तर्हि एव मम भगिनीं भवान् परिणेतुम् अर्हति। भवान् ग्रीक्जनेभ्यः द्रोहम् आचरितुं न इच्छति चेत् न्यूनातिन्यूनं भवतः पक्षस्थेषु वीरेषु अन्यतमः भूदेवः अन्ये केचन वीराः च भवता मारणीयाः" इति।

न स्वीकृतवान्। अपि तु सः हेमाम्बरं बहुधा निन्दित्वा तं प्रतिप्रेषितवान्। एतस्याः घटनायाः अनन्तरं प्रतिदिनम् अपि ग्रीक्शिबिरस्य उपरि कुतश्चित् बाणाः आगत्य पतन्ति स्म, तेन च बहवः ग्रीक्सैनिकाः मृताः भवन्ति स्म। एवमेव दश दिनानि अतीतानि। दशदिनानाम् अनन्तरं ग्रीक्नौकानां मार्गदर्शकत्वेन यः आगतः आसीत्, सः कांशुकः चक्रवर्तिनम् उक्तवान् - "हेमाम्बरः सूर्योपासकः, सूर्यस्य परमभक्तः च। सः यदा स्वपुत्रीं नेतुम् आगतवान्, तदा भवान् तं निन्दित्वा प्रतिप्रेषितवान्। अनन्तरं हेमाम्बरः स्वसमस्यां सूर्यदेवं निवेदितवान् इत्यतः सूर्यदेवः बाणप्रयोगपूर्वकम् अस्मान् दण्डयन् अस्ति। एतस्मात् अस्माभिः आत्मरक्षणं करणीयं चेत् यावच्छीघ्रं हेमा सगौरवं पितुः समीपं प्रेषणीया। नो चेत् अस्माकं सर्वनाशः भविष्यति" इति।

कांशुकस्य वचने विश्वस्य चक्रवर्ती हेमाम् अनुक्षणं हेमाम्बरसमीपं प्रेषितवान्। अनन्तरं सः स्वाधिकारबलेन वज्रकायस्य आधीन्ये स्थितां भामिनीं स्वायत्तीकृतवान्।

चक्रवर्तिनः एतस्मात् व्यवहारात् वज्रकायः कुपितः। अतः सः प्रतिज्ञां कृतवान् यत् - मम, युद्धस्य च कोऽपि सम्बन्धः नास्ति इति, इतःपरम् अस्मिन् युद्धे भागं न ग्रहीष्यामि इति च। वज्रकायः इतःपूर्वम् एव प्रमोदिन्याम् अनुरक्तः आसीत्। प्रमोदिन्याः पितुः वर्धनस्य सन्तोषं



जनयितुम् इदानीं वज्रकायेन सदवकाशः प्राप्तः। वज्रकायः स्वसैन्येन सह युद्धरङ्गात् निर्गतवान्।

ग्रीक्जनानां परतया इतःपरं युद्धं न करिष्यामि इति वज्रकायेन या प्रतिज्ञा कृता, तां श्रुत्वा ट्राय्सैनिकाः अतीव सन्तुष्टाः। अनन्तरं ट्राय्सैनिकाः महता उत्साहेन ग्रीक्जनानाम् उपरि आक्रमणं कृतवन्तः। एतत् महदाक्रमणं दृष्ट्वा चक्रवर्ती भीतः। अतः सः युद्धविरामार्थं ट्राय्सैनिकेभ्यः वार्तां प्रेषितवान्।

युद्धं स्थगितम्। एषः महान् सङ्घर्षः भुवनसुन्दरीनिमित्तम् एव इति कारणतः, वस्तुतः भुवनसुन्दरी केन प्राप्तव्या इति निर्णयार्थं सर्वे अपि सम्भूय समालोचनं कृत्वा



निर्णीतवन्तः यत् - भुवनसुन्दर्याः पत्युः प्रतापस्य, ताम् अपहृतवतः मोहनस्य च मध्ये द्वन्द्वयुद्धं प्रचलेत् इति। प्रतापेन मोहनेन च परस्परं द्वन्द्वयुद्धं कृतम्। किन्तु युद्धस्य समाप्तेः पूर्वम् एव मोहनः अदृश्यतां गतः। देवता कामिनी स्वमायाशक्त्या मोहनं ट्रायनगरं नीतवती।

द्वन्द्वयुद्धेन अपि कोऽपि निर्णयः न जातः इति कारणतः पुनरपि युद्धम् आरब्धम्। कण्टकनामकः ट्रायवीरः प्रतापं लक्ष्यीकृत्य बाणं प्रयुक्तवान्। एतत् दृष्ट्वा अत्यन्तं कुपितः देवमयः कण्टकं मारयित्वा प्रशंसनं घातितवान्।

अनन्तरं वीरसिंहः आत्मना सह द्वन्द्वयुद्धार्थं वज्रकायम् आहूतवान्। किन्तु वज्रकायः 'अहं युद्धरङ्गात् विश्रान्तिं स्वीकृतवान् अस्मि' इति वदन् वीरसिंहस्य वचनं निराकृतवान्। ग्रीकजनाः वीरसिंहेन सह द्वन्द्वयुद्धार्थं भूदेवं चितवन्तः। यतः ग्रीकवीरेषु वज्रकायात् द्वितीयत्वेन प्रसिद्धः महावीरः नाम भूदेवः एव।

वीरसिंहः भूदेवः च सूर्यास्तं यावत् द्वन्द्वयुद्धं कृतवन्तौ। किन्तु केनापि जयः पराजयः वा न प्राप्तः। उभौ अपि समानशौर्येण युद्धं कृतवन्तौ। यदा सूर्यः अस्तं गतः, तदा उभौ अपि युद्धं स्थगयित्वा परस्परं शौर्यसाहसादिकं प्रशंसन्तौ पारितोषिकविनिमयं कृतवन्तौ।

उभौ अपि पक्षौ तात्कालिकं युद्धविरामम् अङ्गीकृतवन्तौ। ग्रीकजनाः एकत्र गर्तं कृत्वा युद्धे मृतानां स्वपक्षीयानां निखननं कृतवन्तः। तदुपरि उन्नतां भित्तिमेकां निर्मितवन्तः। ते तस्याः भित्तेः पुरोभागे गभीरं खातं निर्माय तस्य पुरतः एकां वृतिं निर्मितवन्तः।

पुनरपि युद्धस्य आरम्भः जातः। अस्मिन् युद्धे ग्रीकजनाः महान्तं पराजयं प्राप्तवन्तः। ट्रायजनाः ग्रीकसैनिकान् खातसमीपस्थायाः भित्तेः समीपं प्रतिप्रेषितवन्तः। तस्यां रात्रौ ट्रायसैनिकाः समुद्रतीरं प्राप्य, ग्रीकनौकास्थानात् अनतिदूरे एव वासं कृतवन्तः।

युद्धे पराजयः अभवत् इत्यतः चक्रवर्ती अतीव खिन्नः। 'केनापि प्रकारेण वज्रकायः पुनरपि युद्धे नियोजनीयः, नो चेत् पराजयः



निश्चितः एव' इति विचिन्त्य चक्रवर्ती उपायनैः सह रक्तवर्णं, भूदेवं, रूपधरं च वज्रकायसमीपं प्रेषितवान् । ते गत्वा वज्रकायम् उक्तवन्तः - "चक्रवर्ती वार्तां प्रेषितवान् यत् - भवदीयां भामिनीं भवान् एव स्वीकर्तुम् अर्हति। अतः कृपया अस्माकं पक्षम् आश्रित्य युद्धार्थम् आगच्छतु इति" इति।

वज्रकायाय भामिन्याः प्रत्यर्पणार्थम् अन्यत् अपि कारणम् आसीत्। चक्रवर्तिना पितृसमीपं प्रेषिता हेमा "अहम् अत्र न तिष्ठामि। चक्रवर्तिसमीपे स्थितिः एव मम आनन्दं जनयति" इति पितरम् उक्त्वा पुनरपि चक्रवर्तिनः समीपम् एव आगतवती आसीत्।

चक्रवर्तिना प्रेषितैः दूतैः सह वज्रकायः प्रीत्या एव व्यवहृतवान्। किन्तु सः स्वनिर्णयं परिवर्तयितुं न इष्टवान् एव। अपि च सः भूदेवादीन् उक्तवान् - "श्वः प्रातःकाले एव अहं मम सैन्येन सह मम देशं प्रतिगमिष्यामि" इति।

वज्रकायस्य वचनं श्रुत्वा भूदेवादयः ततः निर्गताः।

तस्याम् एव रात्रौ रूपधरः देवमयः च ट्राय्सैनिकानां शिबिरस्य उपरि आक्रमणं कृतवन्तौ।

तावता ताभ्यां ट्राय्गूढचराः मध्येमार्गं लब्धाः। रूपधरः देवमयः च गूढचरेभ्यः बलात् शत्रुरहस्यं ज्ञात्वा तान् गूढचरान् मारितवन्तौ।

ट्राय्गूढचरैः प्रमुखं किञ्चन रहस्यं स्फोटितम् आसीत्।

विच्छेदननामकः थ्रेस्देशस्य राजा उत्तमैः श्वेतवर्णीयैः अश्वैः सह, स्वकर्मकरैः सह च आगत्य ट्राय्सैनिकशिबिरे स्थितवान् अस्ति। तदीयाः अश्वाः वायुवेगम् अपि अतिक्रम्य धावितुं समर्थाः। ते अश्वाः ट्राय्नगरे चरन्तः तस्य नगरस्य दक्षिणभागे प्रवहन्त्याः स्कामुन्दर्नामिकायाः नद्याः जलं यदि पिबन्ति, तर्हि ट्राय्नगरं केनापि जेतुम् अशक्यम् इति काचित् प्रतीतिः अस्ति। विच्छेदनस्य अश्वैः इतोऽपि एतादृशं कार्यं न कृतम् आसीत्। विच्छेदनः तस्यां रात्रौ ट्राय्शिबिरस्य दक्षिणभागस्थे पटगृहे शयितवान् अस्ति इति गूढचराणां द्वारा

ग्रीकजनैः ज्ञातम् । रूपधरः देवमयः च गूढचरान् मारयित्वा, विच्छेदनेन यस्मिन् पटगृहे वासः कृतः आसीत् तत् पटगृहं गतवन्तौ । तत्र तौ निद्रां कुर्वन्तं विच्छेदनं, तस्य द्वादश अनुचरान् च मारितवन्तौ । विच्छेदनेन आनीतान् श्वेतवर्णीयान् अश्वान् स्वीकृत्य विजयोत्साहेन स्वशिबिरं प्रति गतवन्तौ रूपधरः देवमयः च ।

किञ्चित्कालानन्तरं विच्छेदनस्य अन्ये अनुचराः निद्रातः जागरणं प्राप्तवन्तः । ते विच्छेदनस्य, अन्येषाम् अनुचराणां च हननं दृष्ट्वा भीताः सन्तः ततः पलायितवन्तः । मध्येमार्गं ग्रीकजनाः तान् सर्वान् अपि निर्दयं मारितवन्तः ।

एवं सत्यपि तृतीये दिने प्रवृत्ते युद्धे अपि ग्रीकजनैः पराजयः प्राप्तः ।

ट्रायसैनिकैः सह कृते युद्धे इतःपूर्वं कदापि एतादृशः पराजयः न प्राप्तः आसीत् ग्रीकजनैः । युद्धे चक्रवर्ती, देवमयः, रूपधरः अन्ये च प्रमुखाः वीराः व्रणिताः अभवन् ।

युद्धरङ्गे सिंहसदृशः वीरसिंहः ग्रीकजनान् पराजितान् कृतवान्, तैः निर्मितां भित्तिं च भेदितवान् । न केवलं तावत्, ततोऽपि अग्रे गत्वा ग्रीकसैनिकानां वासस्थानम् एव लुण्ठितवान् वीरसिंहः । ग्रीकवीरैः महता यत्नेन वीरसिंहः सम्मुखीकृतः चेदपि वीरसिंहस्य आक्रमणं सोढुम् अशक्ताः अभवन् ते ।

भूदेवेन क्षिप्तेन शिलाखण्डेन वीरसिंहः ताडितः सन् अधः पतितः । परन्तु सः क्षणाभ्यन्तरे एव उत्थितवान्, पुनरपि युद्धम् आरब्धवान् च । एतस्मात् ट्रायसैनिकाः अतीव सन्तुष्टाः ।

अनन्तरं ट्रायजनाः ग्रीकनौकाः आरूढवन्तः, एकां नौकाम् अग्निना दग्धवन्तः च । ट्रायजनाः यां नौकां दग्धवन्तः आसन्, सा नौका चन्द्रप्रभस्य आसीत् । ग्रीकनौकाः यदा ट्रायतीरं प्राप्तवत्यः आसन्, तदा ट्रायभूमौ सर्वप्रथमम् अवतीर्णः चन्द्रप्रभः आसीत् । सः एव सर्वेषाम् अपेक्षया प्रथमं मरणं प्राप्तवान् ।

(अनुवर्तते)



# र स वा र्ताः

## विकलाङ्गानां निमित्तं स्कूटर्यानम्

सुखेन पृष्ठभागम् अवलम्ब्य उपविश्य चालयितुं योग्यस्य स्कूटर्यानस्य निर्माणं एषु दिनेषु जातम् अस्ति। एतस्य चालनसमये अपि चक्रयुते आसन्दे उपविश्य विश्रान्तिः प्राप्यमाणा अस्ति इव एव अनुभूयते। एतस्य यानस्य सर्वाणि अपि चक्राणि ६० से.मी. वैशाल्ययुतानि सन्ति। १५ से.मी. परिमाणकान् निम्नोन्नतप्रदेशादीन् अपि सुलभतया अतिक्रम्य गच्छति एतत् यानम्। एतस्मिन् वाहने २४ वोल्टेज् एलेक्ट्रिक् मोटार, ३ पुश्बटन् च योजितानि सन्ति। एतत् यानं वेगेन, मन्दं च चलति। एतत् यानं प्रतिमुखम् अपि चालयितुं शक्यम्। विविधाः रोधिन्यः सन्ति। एतस्य यानस्य सर्वान् अपि अवयवान् निष्कास्य सुलभतया कार्यानेन अपि नेतुं शक्यते। अत्यन्तम् आनुकूल्ययुक्तम् एतादृशं वाहनं केषां निमित्तं निर्मितं स्यात्? सामान्यजनानां निमित्तं तु न, अपि तु विकलाङ्गानाम् आनुकूल्यार्थं सज्जीकृतम् अस्ति एतत् यानम्।



## गानकलायां विक्रमः साधितः

मद्रास्नगरस्थानां कासाचित् कलाशालानां विद्यार्थिनः 'लक्ष्मणश्रुति' नामकं सङ्गीतवृन्दम् आयोज्य तद्द्वारा ललितसङ्गीतं, चलनचित्रगीतानि च गायन्तः श्रोतॄन् रञ्जयन्तः सन्ति। एते विद्यार्थिनः गतस्य डिसेम्बर्मासस्य १७ दिनाङ्के ३६ घण्टाः यावत् अनुस्यूततया चलनचित्रगीतगानपूर्वकं नूतनं कञ्चित् विक्रमं साधितवन्तः सन्ति। एते स्वसामर्थ्यविषयं गिन्निस् बुक् आफ् वर्ल्ड्स् रेकार्ड्स्संस्थां प्रति निवेदितवन्तः सन्ति।

## वेगवत् धूमशकटम्

'षिन्कान्सेन्' नामकं बुलेट्धूमशकटं गतेभ्यः त्रिंशद्वर्षेभ्यः जपान्देशे टोकियो-ओसाकानगरयोर्मध्ये प्रतिघण्टं २२० कि.मी. वेगेन चलत् अस्ति। एतावान् वेगः अस्ति चेत् अपि अद्यपर्यन्तम् अपि अपघातः न अभवत्। १९६५ वर्षस्य अक्टोबर्मासस्य प्रथमे दिनाङ्के आरब्धम् एतत् धूमशकटं जपान्देशे यानि धूमशकटानि वेगेन चलन्ति, तेषां सर्वेषां 'मार्गदर्शि' इति वक्तुं शक्यते। एतदनन्तरम् आरब्धानि अपि कानिचन धूमशकटानि इदानीं चलन्ति न सन्ति। किन्तु 'षिन्कान्सेन्' तु न स्थगितम्। प्रतिघण्टं २७० कि.मी. वेगेन चलति 'नोजोमि' धूमशकटम्। एतत् १९९२ तमे वर्षे आरब्धम्। एतेन प्रयाणं कृतं चेत् टोकियो-ओसाकानगरयोः दूरस्य (५१८ कि.मी.) प्रयाणकालः १९ निमेषान् यावत् न्यूनः भवति। किन्तु केनचित् कारणेन एतत् नोजोमिधूमशकटं सद्यः काले चलत् नास्ति।





# सत्पात्रे दानम्

ध्येयम् एव लक्ष्यीकृत्य प्रस्थितः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्, मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत् - ''राजन्! अस्मिन् भयजनके श्मशाने मध्यरात्रे भवान् महान्तं परिश्रमं वहन् अस्ति इति यत् - तेन मयि भवद्विषये कोपः उत्पद्यते। यतः यः स्वार्थपरः स्वहितं केवलं चिन्तयन् अपूर्वां काञ्चित् शक्ति सम्पादयितुम् इच्छति, सः कश्चित् कालं यावत् परिश्रमं कुर्यात्। किन्तु कष्टानि यदा आपतन्ति, तदा धैर्यहीनः सः कार्यात् विमुखः भवति। यः निस्स्वार्थी सन् समाजहितार्थं परिश्रमं करोति, समाजहितम् एव प्रधानं मन्यते, स्वसुखं च तृणाय मन्यते, सः आवश्यकतायां सत्यां प्राणत्यागार्थम् अपि सिद्धः भवति। केचन केषुचित् सन्दर्भेषु स्वहितं किं, समाजहितं च,

वेतालकथा



किम् इति ज्ञातुम् अशक्ताः अविवेकेन छलवादिनः भवन्ति। एतत् कार्यं प्रति भवन्तं कः प्रेरितवान् इति न जानामि अहम्। किन्तु मम सन्देहः अस्ति यत् - परिश्रमेण साधितं सर्वं भवान् अपात्राय दद्यात् वा इति। अपात्रदानं पापाय इति उच्यते। एतत् वचनं न केवलं मानवानां विषये, अपि तु राक्षसानां, देवतानां विषये चापि अन्वेति। एतस्य निदर्शनार्थं रक्ततर्पणनामकस्य राक्षसस्य कथां श्रावयामि, यश्च आत्मना सम्पादितम् अपूर्वमाणिम् अविवेकेन अपात्रे दत्तवान्। श्रद्धया शृणोतु तावत्, येन भवतः मार्गायासः परिहृतः स्यात्" इति।

अनन्तरं वेतालेन कथा आरब्धा -

दण्डकारण्ये रक्ततर्पणनामकः राक्षसः आसीत्। दण्डकारण्यं हिमगिरि-सिंहपुरराज्ययोः मध्ये आसीत्। तस्मात् बहवः तेन अरण्यमार्गेण प्रयाणं कुर्वन्ति स्म। ये प्रयाणिकाः तेन दण्डकारण्यमार्गेण गच्छन्ति, तान् गृहीत्वा खादति स्म रक्ततर्पणः।

सौन्दर्यवती दयागुणसम्पन्ना च चन्द्रकान्तानामिका गन्धर्वकन्या कदाचित् भूलोकम् आगत्य दण्डकारण्ये विहरन्ती आसीत्। तदा तया कण्ठे धृतः कश्चित् मणिः अकस्मात् अधः पतितः। एतत् अजानती सा विहारं समाप्य ततः गन्धर्वलोकं प्रतिगतवती।

रक्ततर्पणेन अरण्ये प्रयाणिकानाम् अन्वेषणसमये चन्द्रकान्तायाः मणिः दृष्टः। सः मणिः विविधैः वर्णैः प्रकाशते स्म। रक्ततर्पणः तं मणिः हाररूपेण स्वकण्ठे धृतवान्।

तस्य अपूर्वमणेः धरणमात्रेण एव रक्ततर्पणे मानसिकं परिवर्तनं जातम्। अपूर्वमणेः प्रभावेण महाक्रूरिणः अपि तस्य राक्षसस्य हृदयं दयाकरुणादिभिः युक्तम् अभवत्।

तावता तेन प्रयाणं कुर्वन्तः यात्रिकाः दृष्टाः। कश्चित् बालः 'माम् उन्नयतु' इति पितरं पीडयति स्म। किन्तु पिता 'उन्नेतुं न शक्नोमि अहम्। अतः चलतु भवान्' इति वदन् कोपं प्रकटयति स्म। एतत् दृष्ट्वा रक्ततर्पणः तयोः समीपं गत्वा उक्तवान् - "चलितुम् अशक्तम् अल्पं बालम् उन्नेतुं न

शक्नोति खलु भवान् ! अतः मम स्कन्धे उपविशताम् भवन्तौ उभौ अपि। क्षणाभ्यन्तरे भवन्तौ गृहं प्रापयिष्यामि'' इति।

राक्षसस्य दर्शनात् भीतः सः यात्रिकः पुत्रं गृहीत्वा ततः धावितवान्।

प्रयाणिकानां दर्शनमात्रेण एव तान् गृहीत्वा बुभुक्षानिवारणं कुर्वति मयि एतादृशः सेवामनोभावः उत्पन्नः इति यत् तेन अतीव आश्चर्यचकितः रक्ततर्पणः। एतस्य परिवर्तनस्य किं कारणं स्यात् इति चिन्तयन् रक्ततर्पणः आत्मावलोकनं कुर्वन् कस्यचित् वृक्षस्य अधः उपविष्टवान्। अनतिदूरे एव गच्छन् मुनिः धर्मवेदः रक्ततर्पणं दृष्टवान्। धर्मवेदः महातपस्वी आसीत्।



धर्मवेदः दिव्यदृष्ट्या रक्ततर्पणस्य मनोभावम् अवगत्य तत्समीपं गत्वा - ''राक्षसोत्तम ! आत्मनः व्यवहारेण आश्चर्यचकितः अस्ति खलु भवान्। तस्य कारणं - भवता स्वकण्ठे धृतः मणिः एव। सः अपूर्वमणिः दयापूर्णायाः गन्धर्वकन्यायाः चन्द्रकान्तायाः। मनोभीष्टस्य पूरणसामर्थ्यम् अस्ति तस्य अपूर्वमणेः। अतः भवान् यदि परोपकारं कर्तुम् इच्छति, तर्हि मानवरूपं धृत्वा साहाय्यं कर्तुम् अर्हति'' इति उक्त्वा ततः अग्रे गतवान्।

मुनेः धर्मवेदस्य वचनं श्रुत्वा अपूर्वमणेः प्रभावं परीक्षितुम् इच्छन् रक्ततर्पणः मणिं मनुष्यरूपं प्रार्थितवान्। अपरक्षणे एव रक्ततर्पणः मानवरूपं प्राप्तवान्।

तस्मात् दिनात् आरभ्य रक्ततर्पणः अरण्यमार्गेण प्रयाणं कुर्वतां सर्वेषां यात्रिकाणां साहाय्यं करोति स्म।

कदाचित् अनिरीक्षिता काचित् समस्या उत्पन्ना।

मुनिः धर्मवेदः रक्ततर्पणं यदा मणिप्रभावं विवृण्वन् आसीत्, तस्मिन् समये तत्र विद्यमाने कस्मिंश्चित् वृक्षे निलीय स्थितः आदित्यनामकः सिंहपुरस्य गूढचारः धर्मवेदस्य वचनं श्रुतवान् आसीत्। सिंहपुरस्य राज्ञः विक्रमभूपतेः महान् राज्यदाहः। सः प्रतिवेशिराज्यस्य हिमगिरेः उपरि आक्रमणं कृत्वा तत् स्वायत्तीकर्तुं कञ्चित् उपायं चिन्तितवान्।

हिमगिरेः राजा विजयादित्यः महान्

धर्मपरः आसीत् । तस्य पालने प्रजाः सन्तोषेण कालं यापयन्ति स्म ।

विक्रमभूपतिना कृतं युद्धघोषणं श्रुत्वा विजयादित्यः भीतः । यतः हिमगिरिराज्यम् आर्थिकदृष्ट्या रक्षणादृष्ट्या च सिंहपुरस्य अपेक्षया अत्यन्तं बलहीनम् आसीत् । विजयादित्येन सन्धिप्रस्तावः प्रेषितः आसीत् । किन्तु विक्रमभूपतिना सः प्रस्तावः निराकृतः । अतः युद्धम् अनिवार्यम् अभवत् ।

सिंहपुरस्य गूढचारः आदित्यः महाराज विक्रमभूपतिम् आत्मना अरण्ये श्रुतं मणेः प्रभावम् उक्तवान् ।

'सः अपूर्वमणिः राक्षसतः स्वायत्तीकृतः चेत् परितः विद्यमानानि राज्यानि सुलभतया स्वायत्तीकर्तुं शक्यानि' इत्यपि उक्तवान् आदित्यः ।

एतत् श्रुत्वा विक्रमभूपतिः रक्ततर्पणस्य साहाय्यं प्रार्थयितुम् इच्छन् रथम् आरुह्य अरण्यं प्रति प्रस्थितः ।

तस्मिन् एव समये हिमगिरेः राजा विजयादित्यः सन्निहितस्य युद्धस्य विषये जनानाम् अभिप्रायः कः इति ज्ञातुम् इच्छन् वेषान्तरं धृत्वा प्रस्थितवान् । विजयादित्येन कुत्रचित् मुनिः धर्मवेदः दृष्टः । मुनिः धर्मवेदः कस्यचित् वृक्षस्य अधः उपविष्टवान् आसीत् । मुनेः दिव्यं तेजोमयं मुखं दृष्ट्वा विजयादित्यः मुनेः समीपं गत्वा सविनयं तं नमस्कृतवान् ।

तदा धर्मवेदः राजानं विजयादित्यं दृष्ट्वा उक्तवान् - ''राजन् ! भवतः मनसि विद्यमानां वेदनां दिव्यदृष्ट्या एव ज्ञातुं



शक्नोमि अहम् । सिंहपुरस्य राज्ञः विक्रमभूपतेः सम्मुखीकरणार्थं कश्चन उपायः अस्ति । भवान् इदानीम् एव दण्डकारण्यं गच्छतु । तत्र रक्ततर्पणनामकः राक्षसः अस्ति । सः इदानीं कस्यचित् अपूर्वमणेः प्रभावात् मानवरूपं प्राप्य कष्टकाले स्थितानां साहाय्यं कुर्वन् अस्ति । तेन कण्ठे धृतस्य अपूर्वमणेः दर्शनेन भवान् रक्ततर्पणम् अभिज्ञातुं शक्नोति । भवान् रक्ततर्पणं स्वसमस्यां निवेद्य तम् अपूर्वमणिं प्राप्तुं प्रयत्नं करोतु'' इति ।

मुनेः एतत् वचनम् अङ्गीकृत्य विजयादित्यः रक्ततर्पणस्य दर्शनार्थं प्रस्थितः ।

अत्रान्तरे सिंहपुरस्य राजा विक्रमभूपतिः मानवरूपं धृतवन्तं रक्ततर्पणं दृष्ट्वा तं प्रार्थितवान् - ''राक्षसोत्तम ! अहं सिंहपुरस्य राजा विक्रमभूपतिः । भवतः विषये बहुधा श्रुतवान् अस्मि अहम् । ये राजानः परस्परं कलहं कुर्वन्तः राज्यपालनं सम्यक् न कुर्वन्ति, तादृशानां राज्ञां सर्वाणि राज्यानि मया व्यवस्थितं पालनीयानि इति उद्देशेन अत्र आगतवान् अस्मि । भवान् कृपया भवतः समीपे स्थितेन अपूर्वमणिना माम् अनुगृह्णातु, येन अहं बहूनां साहाय्यं कर्तुं शक्नुयाम्'' इति ।

तदा रक्ततर्पणः उक्तवान् - ''अहं प्रथमं भवतः राज्यम् आगत्य भवतः राज्यपालनं परिशीलयिष्यामि । अनन्तरम् एव अपूर्वमणेः दानविषये निर्णयं करिष्यामि'' इति ।

एतत् श्रुत्वा नितरां सन्तुष्टः





विक्रमभूपतिः रक्ततर्पणाय कृतज्ञतां समर्प्य ततः स्वराजधानीं गतवान्।

अनन्तरदिने विजयादित्यः अरण्यस्थं राक्षसं रक्ततर्पणं दृष्ट्वा उक्तवान् - "महानुभाव ! अहं हिमगिरेः राजा विजयादित्यः अस्मि । सिंहपुरस्य राजा विक्रमभूपतिः राज्यदाहेन मम राज्यस्य आक्रमणार्थं प्रयतमानः अस्ति। मम सैन्यस्य अपेक्षया विक्रमभूपतेः सैन्यं बलवत् अस्ति। भवदीयस्य अपूर्वमणेः साहाय्यं विना अहं विक्रमभूपतिं जेतुं न शक्नोमि। धर्मपरस्य मम साहाय्यं भवान् करोति इति मम विश्वासः" इति।

तदा रक्ततर्पणः उक्तवान् - "राजन् ! चिन्तां मा करोतु । अहं भवतः राज्यम् आगत्य प्रजानां योगक्षेमं, तत्रत्यां परिस्थितिं च परिशीलयिष्यामि। अनन्तरम् एव भवतः साहाय्यकरणविषये चिन्तयिष्यामि । अहं भवतः शत्रुं विक्रमभूपतिम् उद्दिश्य अपि एतत् एव वचनम् उक्तवान् अस्मि" इति।

विजयादित्यः सन्तोषेण रक्ततर्पणस्य वचनम् अङ्गीकृत्य श्रद्धया तं नमस्कृत्य ततः निर्गतवान्।

रक्ततर्पणः प्रथमं हिमगिरिराज्यं गतवान्। तत्रत्यपरिस्थितिं दृष्ट्वा सः ज्ञातवान् यत् - विजयादित्यः धर्मपरः इति, तस्य राज्यपालने तत्रत्याः प्रजाः च सुखेन सन्ति इति च । तत् राज्यम् आक्रान्तुं सिंहपुरस्य राजा युद्धसिद्धतां कुर्वन् अस्ति इत्यपि ज्ञातं रक्ततर्पणेन । हिमगिरिराज्यतः रक्ततर्पणः सिंहपुरं गतवान्। तत्र सर्वस्य परिशीलनात् राज्ञः विक्रमभूपतेः क्रूरं राज्यपालनं, तस्य दुरुद्देशं च ज्ञातवान् सः।

अपूर्वमणिः कस्मै दातव्यः इति विचिन्त्य रक्ततर्पणः विक्रमभूपतेः समीपं गत्वा - "राजन् ! मया एषः अपूर्वमणिः भवते दीयते" इति उक्त्वा तस्मै मणिं दत्त्वा ततः अरण्यं गतवान्।

वेतालः एवं कथां समाप्य अवदत् - "राजन्! रक्ततर्पणेन अपात्रदानं कृतं खलु! विक्रमभूपतिः अत्यन्तं क्रूरतया राज्यं पालयति स्म । अपि च दुराशापरः सः प्रतिवेशिराज्यानाम् आक्रमणे प्रयतमानश्च आसीत्। एतं विषयं रक्ततर्पणः स्वयम् एव गत्वा परिशीलितवान् अस्ति अपि। तादृशाय

दुष्टाय महाराजाय अपूर्वमणेः दानं कृतवान् रक्तलर्पणः । एतस्मात् प्रजापीडनार्थं विक्रमभूपतेः साहाय्यं कृतम् अभवत् खलु रक्तलर्पणेन ? एतस्मात् विक्रमभूपतेः क्रूरता इतोऽपि अधिका भविष्यति खलु ! रक्तलर्पणः किमर्थम् अपात्रे दानं कृतवान् ? यदि सः अपूर्वमणिः शान्तस्वभावयुताय धर्मपराय च विजयादित्याय दत्तः स्यात्, तर्हि सः विक्रमभूपतिः युद्धे जित्वा तद्राज्यस्य प्रजानां पालनम् अपि व्यवस्थितम् अकरिष्यत् खलु ! ततश्च न केवलं हिमगिरिराज्यस्य अपि तु सिंहपुरस्य अपि हितं सिद्धम् अभविष्यत् खलु ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान् - ''रक्तलर्पणेन कृतं कार्यम् अविवेकयुतम् अपात्रदानं च इति भासेत। किन्तु वस्तुस्थितिः तथा नास्ति । सः स्वकीयस्य अनुभवस्य आधारेण विवेकेन एव व्यवहृतवान् । 'क्रूरस्वभावयुतः अहम् अरण्यमार्गेण प्रयाणं कुर्वतः यात्रिकान् गृहीत्वा खादामि स्म। तादृशः क्रूरः अपि अहं मणिप्रभावेण सज्जनः सञ्जातः । विक्रमभूपतिः तावत्, राज्याकाङ्क्षया युद्धम् उद्घोष्य प्रजानाशनार्थम् उद्युक्तः अस्ति। अपूर्वमणिप्रभावेण तादृशस्य क्रूरस्य अपि महाराजस्य स्वभावे परिवर्तनं भविष्यति। तस्मात् सः उत्तमरूपेण राज्यपालनं करिष्यति च। स्वभावतः एव सज्जने धर्मपरे च विजयादित्ये अपूर्वमणेः प्रभावः भविष्यति चेदपि तेन विशेषप्रयोजनं किमपि न भवति। अतः विजयादित्याय मणिदानं व्यर्थम्' इति एवं प्रकारेण चिन्तयन् रक्तलर्पणः अपूर्वमणेः दानं अपात्रे न कृतवान्, अपि तु सत्पात्रे एव कृतवान्'' इति।

एवं वदतः राज्ञः त्रिविक्रमस्य यदा मौनभङ्गः जातः, तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# महाराजपदवीप्राप्तियोगः

राजा अनङ्गपालः धर्मपुरं पालयति स्म । तस्य एका एव पुत्री आसीत् । पुत्र्याः नाम लावण्या । लावण्या रूपवती बुद्धिमती च । तया अधीतेषु शास्त्रेषु ज्योतिश्शास्त्रम् अपि अन्यतमम् । पुत्री यदा प्राप्तयौवना जाता, तदा राजा अनङ्गपालः वरान्वेषणम् आरब्धवान् ।

एतत् ज्ञात्वा राजकुमारी लावण्या कदाचित् पितरम् उक्तवती - ''तात ! मम जातकपरिशीलनेन ज्ञातं यत् मम पतिः चक्रवर्ती भविष्यति इति । अतः भवान् राजकुमाराणां जातकानि आनीय ददातु । यस्य महाराजपदवीप्राप्तियोगः अस्ति, तम् एव राजकुमारं परिणेष्यामि'' इति ।

राजा बहूनां राजकुमाराणां जातकानि भावचित्राणि च आनाय्य पुत्र्यै दत्तवान् । तानि दृष्ट्वा राजकुमारी पितरम् उक्तवती - 'एतेषु कस्यापि महाराज-पदवीप्राप्तियोगः नास्ति' इति ।

तदा राजा पुत्रीम् उक्तवान् - ''वत्से ! मया दत्तानि भावचित्राणि दृष्ट्वा कः भवत्याः इष्टाय अभवत् इति मां सूचयतु । तस्य महाराज-पदवीप्राप्तियोग-विषये भवत्याः ज्योतिषगुरुः मार्तण्डः परीक्षां करिष्यति'' इति ।

अनन्तरदिने प्रतिवेशिराज्यस्य युवराजस्य भावचित्रं पश्यन्ती लावण्या तस्य सौन्दर्येण आकृष्टा अभवत् । एतत् ज्ञात्वा राजा मुहूर्तं निश्चित्य शीघ्रातिशीघ्रमेव प्रतिवेशिराज्यस्य युवराजेन सह पुत्र्याः विवाहं वैभवेन निर्वर्तितवान् ।

विवाहानन्तरं लावण्या - 'गुरुः मार्तण्डः तीर्थयात्रानिमित्तं काशीं गतवान् अस्ति । एवं तर्हि मम पत्युः जातकं केन परिशीलितम् ?' इति चिन्तयन्ती स्वसन्देहं पितुः पुरतः प्रकटीकृतवती ।

तदा राजा मन्दहासपूर्वकम् उक्तवान् - ''भवत्याः जातके पत्युः महाराजपदवीयोगः अस्ति इति अस्ति खलु । यः राजकुमारीं भवतीं परिणेष्यति सः निश्चयेन सिंहासनस्य उत्तराधिकारी, तन्नाम महाराजः, भवेत् एव । अतः वरस्य जातकस्य परिशीलनस्य आवश्यकता नास्ति इति चिन्तितं मया'' इति ।



## प्राचीनानि दुर्गाणि - १

प्राच्य-संशोधनसंस्थया १९६० तमे वर्षे राजस्थानस्थायाः जलरहितसरस्वतीनद्याः तीरे कस्मिंश्चित् नगरे संशोधनम् आरब्धम् । बहुभ्यः वर्षेभ्यः तस्मिन् नगरे केऽपि न वसन्ति स्म । तत्र संशोधनकरणेन कृष्णवर्णीयानि कङ्कणानि लब्धानि । अतः एव तत् नगरं 'कालिबङ्गा' (कालि = कृष्णः, बङ्गा = कङ्कणम्) इति नाम्ना ख्यातम् अभवत् ।

परितः दुर्गभित्तियुतं कालिबङ्गानगरं क्रि. पू. २२००-१७०० वर्षाणां मध्यकालीनम् । तस्मात् एतत् नगरं सिन्धुखात-नागरिकता-कालसम्बन्धि इति उच्यते ।

# अस्मद्देशीयानि दुर्गाणि

रचना - मीरा उग्रा ।
चित्राणि - गौतमसेनः ।

एतत्कालीनानि एव कानिचन दुर्गाणि गुजरात् - राजस्थान-हरियाणराज्येषु च कृतेन संशोधनेन ज्ञातानि सन्ति । दुर्गाणां महत् प्रयोजनं नाम शत्रूणाम् आक्रमणात् रक्षणम् । न केवलं तावत् - वृष्ट्यादिनिमित्तम् अत्युद्धताः नद्यः यदा उद्गच्छन्ति, तदा तत्रत्यानां जनानां रक्षकाणि भवन्ति एतानि दुर्गाणि । अतः एव प्रमुखाणि दुर्गाणि सदा उन्नते प्रदेशे निर्मीयन्ते स्म ।

ऋग्वेदे दुर्गस्य पुरम् इत्यपि नाम अस्ति । इन्द्रस्य अपरं नामधेयं पुरन्दरः इति । पुरन्दरः नाम दुर्गाणां जेता इत्यर्थः । यजुर्वेदसम्बन्धिनि धनुर्वेदे दुर्गनिर्माणसम्बद्धाः

सिन्धुखातकालीनं कालिबङ्गानगरम्

साङ्केतिकाः बहवः विषयाः विवृताः सन्ति । धनुर्वेदे षड्विधानि दुर्गाणि उल्लिखितानि सन्ति । पर्वते निर्मीयमाणं दुर्गं गिरिदुर्गम्, जले निर्मीयमाणं जलदुर्गम्, अरण्ये निर्मीयमाणं वनदुर्गम्, भूमौ निर्मीयमाणं महीदुर्गम्, मरुभूमौ



पुरन्दरः इन्द्रः



निर्मीयमाणं धन्वदुर्गम्, वृक्षाणां मध्ये निर्मीयमाणं वृक्षदुर्गम् इति - एतानि षड्विधानि दुर्गाणि । एतेषु पर्वते निर्मीयमाणं गिरिदुर्गम् एव श्रेष्ठम् इति धनुर्वेदे उक्तम् अस्ति । दुर्गरहितः राजा विषरहितः सर्पः इव कथ्यते । रामायणम् अयोध्या-लङ्कानगर्योः दुर्गाणि वर्णयति । अयोध्यायाः दुर्गं परितः गभीराः परिखाः निर्मिताः आसन् । तदीयं रक्षागोपुरं शत्रुषु भयं जनयति स्म । लङ्कादुर्गं गगनचुम्बिप्राकारैः, दुर्गमैः अरण्यैः, नदीभिः, गभीरैः खातैः च आवृतम् असीत् । तत् दुर्गं देवताभिः अपि भेत्तुम् अशक्यम् आसीत् इति वर्ण्यते ।



सेतुनिर्माणम्

महाभारते हस्तिनापुरस्य, इन्द्रप्रस्थस्य, मथुरायाः, राजगृहस्य, अहिच्छत्रस्य, द्वारकायाः च दुर्गाणि वर्णितानि सन्ति।

इन्द्रप्रस्थस्य दुर्गस्य भित्तौ तत्र तत्र विशिष्टानि रक्षागोपुराणि आसन्। ततः नगरस्य सर्वप्रदेशेषु अपि रक्षणस्य व्यवस्थार्थं विविधाः व्यवस्थाः कृताः आसन्। दुर्गस्य प्रमुखद्वारं



विना गरुडद्वारनामकाः अन्ये अपि केचन रहस्यमार्गाः आसन्।

अलहाबाद्समीपे कृतेन संशोधनेन कौशाम्बिदुर्गस्य अवशेषाः प्राप्ताः सन्ति। परीक्षिद्राजस्य वंशजः निचक्षुः एतत् निर्मितवान् स्यात् इति अभिप्रयन्ति संशोधकाः।

बुद्धस्य काले चम्पा, राजगृहं, साकेतं, वाराणसी च प्रमुख-दुर्गयुतानि नगराणि आसन्। वायव्यदिशि तक्षशिला, पुष्कलावती, गान्धारराज्यानि च अतीव प्रबलानि आसन्। चक्रवर्ती अलेक्साण्डर् यदा आक्रमणार्थम् आगतवान्, तदा एतानि राज्यानि धैर्येण युद्धम् अकुर्वन्। अलेक्साण्डर् महता प्रयत्नेन एकमासानन्तरं पुष्कलावतीदुर्गं स्वायत्तीकृतवान्। पुरुषोत्तमेन सह युद्धम्, युद्धरङ्गे गजानां दर्पम्, युद्धे भारतीयवीरैः दर्शितानि धैर्यसाहसादीनि च दृष्ट्वा अलेक्साण्डरसैन्यं भीतम् अभवत्। न केवलं तावत्, तत्कालीनं मगधराज्यं

पालितवतः धननन्दनस्य सैन्यबलं ज्ञात्वा ग्रीकसैन्यं भीतम्। अनन्तरकाले चन्द्रगुप्तमौर्यः यदा मगधं पालयति स्म, तस्मिन् काले आगतः ग्रीकयात्रिकः मेगास्तनीस्वर्यः मगधराजधान्याः पाटलीपुत्रस्य महतः दुर्गस्य विषयं आत्मना लिखिते ग्रन्थे विस्तरेण



पाटलीपुत्रदुर्गस्य द्वाराणि

वर्णितवान् अस्ति। पाटलीपुत्रस्य दुर्गस्य प्राकारः ४० कि-मी. अपेक्षया अपि अधिकः दीर्घः आसीत्। दुर्गभित्तिं परितः ३.५ मी. गभीरा, १८० मी. वैशाल्ययुता च परिखा आसीत्। परिखास्थे जले सदा घोराः मकराः भवन्ति स्म। दुर्गस्य ६४ द्वाराणि, ५७० रक्षागोपुराणि च आसन्।

अस्माकं देशे दुर्गनिर्माणकला क्रि.पू. ३०० वर्षात् पूर्वम् एव परिष्कृता जाता आसीत्।

*(अत्रत्यानि चित्राणि दुर्गाणां वर्णनम् आधारीकृत्य चित्रकारेण चित्रितानि सन्ति। अन्तिमं चित्रं साञ्चिस्तूपस्य भित्तेः उपरि विद्यमानस्य शिल्पस्य रेखाचित्रम्।)*



शत्रुभिः आक्रान्तस्य दुर्गस्य दृश्यम्



# सुवर्णमयूरी

विन्ध्यारण्ये काचित् सुवर्णमयूरी निवसति इति वार्ता कनकपुरस्य महाराजेन ज्ञाता । एतं विषयं श्रुत्वा राजा विचित्रसेनः तां मयूरीं ग्रहीतुम् इच्छन् कैश्चित् भटैः सह विन्ध्यारण्यं प्रति प्रस्थितवान् ।

विन्ध्यारण्यस्थे पर्वतमूलप्रदेशे अरण्यजनानां ग्रामः कश्चित् आसीत् । तद्ग्रामस्य प्रमुखः आगतं महाराजं विचित्रसेनं सादरं स्वागतीकृत्य तस्य आतिथ्यं कृतवान् । विचित्रसेनः स्वकीयस्य आगमनस्य उद्देशं तं ग्रामप्रमुखम् उक्तवान् ।

महाराजः सुवर्णमयूर्यर्थम् आगतवान् अस्ति इति श्रुत्वा ग्रामप्रमुखः महाराजम् उद्दिश्य - ''प्रभो ! सा सुवर्णमयूरी केभ्यश्चित् दिनेभ्यः अस्मिन् अरण्ये न दृश्यते । मम पुत्री मोहिनी तां सुवर्णमयूरीं गृहीत्वा भवते उपायनरूपेण दातुम् इच्छन्ती मयूरीग्रहणार्थम् अरण्यं प्रविष्टवती । रात्रिः आसन्ना चेदपि सा न प्रत्यागता । ताम् अन्वेष्टुं गतैः अस्माभिः अरण्यस्य कस्मिंश्चित् प्रदेशे मयूरीपिच्छं, बाणः च दृष्टम्'' इति वदन् पार्श्वे स्थितस्य मुखं दृष्टवान् ।

ग्रामप्रमुखस्य भावम् अवगत्य तस्य पार्श्वे स्थितः जनः कुटीरस्य पार्श्वस्थं प्रकोष्ठं गत्वा सुवर्णपिच्छम् आनीय महाराजस्य पुरतः स्थापितवान् ।

राजा विचित्रसेनः तत् पिच्छं परीक्षापूर्वकं पश्यन् - ''अत्याश्चर्यम् ! सुवर्णपिच्छवती सुवर्णमयूरी देवलोकात् एव आगता स्यात् । यतः एतस्याः मयूर्याः कारणतः एव खलु भवतः पुत्री अदृश्यतां गता अस्ति ? भवान् चिन्तां मा करोतु । सुवर्णमयूरीं भवतः पुत्रीं चापि अन्विष्य आनेष्यामि'' इति उक्त्वा भटैः सह अरण्यस्य अन्तः गतवान् ।



विचित्रसेनः, तस्य भटाः च सुवर्णमयूरीम् अरण्ये सर्वत्र अन्विष्टवन्तः। सायङ्कालसमये केनचित् भटेन मयूरीवासस्थानसदृशः गुल्मः दृष्टः। तत्र कश्चित् सर्पः स्वफणां विशालीकृत्य फूत्कुर्वन् मयूरीं काञ्चित् दंष्टुं प्रयतमानः आसीत्। मयूरी सर्पं पादेन प्रहरन्ती चञ्च्वा घातयति स्म।

एतत् दृष्ट्वा भटः सङ्केतेन राजानम्, अन्यान् च भटान् किमपि सूचितवान्। अनुक्षणं राजा भटाः च मयूर्याः ग्रहणार्थं जालवत् मयूरीं परितः स्थितवन्तः। किन्तु अपायपरिस्थितिं ज्ञात्वा सुवर्णमयूरी वायौ उड्डयनं कुर्वती किञ्चिद्दूरं गतवती, कञ्चित् गुल्मं प्रविश्य ततः अग्रे गता च।

विचित्रसेनः अश्वारूढः सन् सुवर्णमयूरीम् अनुसृत्य गतवान्। भटाः अश्ववत् वेगेन धावितुम् असमर्थाः तत्रैव स्थितवन्तः। मयूरी विचित्रसेनस्य दृष्टिगोचरी सती एव गच्छन्ती कस्याश्चित् नद्याः तीरे स्थितं कुटीरं प्रविष्टवती।

कुटीरस्था वृद्धा मयूरीम् उद्दिश्य - "पुनः कीदृशी आपत् समुपस्थिता?" इति पृच्छन्ती प्रीत्या मयूर्याः पिच्छम् आमृष्टवती।

राजा विचित्रसेनः कुटीरं प्राप्य अश्वात् अवतीर्य कुटीरस्य अन्तः गतवान्।

राजा वृद्धायाः हस्ते स्थितां सुवर्णमयूरीम् आसक्त्या पश्यन् - "अम्ब! एतस्याः सुवर्णमयूर्याः ग्रहणार्थम् एव अहम् अत्र एतत् अरण्यम् आगतवान्। भवती एतां मयूरीं मह्यं ददातु। पारितोषिकरूपेण भवती एतं रत्नहारं स्वीकरोतु" इति वदन् स्वकण्ठस्थं हारं निष्कासयितुम् उद्युक्तः।

तदा वृद्धा महाराजम् उक्तवती - "भवान् महान् चतुरः अस्ति। एषा मम प्रिया मयूरी। अतः एतां दातुं सर्वथा न इच्छामि अहम्। यदि भवान् इच्छति, तर्हि एतस्याः एकं पिच्छं भवते ददाम् अहम्" इति।

एतत् श्रुत्वा महाराजः महता कोपेन - "अहम् एतस्य देशस्य महाराजः अस्मि। अतः एतस्मिन् अरण्ये ये वृक्षाः प्राणिनः पक्षिणः च सन्ति, ते सर्वे अपि मम अधीनाः। एवं स्थिते एषा मयूरी अपि मदीया एव" इति वदन् वृद्धायाः हस्ततः सुवर्णमयूरीं बलात् स्वीकर्तुम् उद्युक्तः।



तावता महाराजः विद्युता आघातं प्राप्तवान् इव अधः पतितवान् । किञ्चित्कालानन्तरं सः आत्मानं निगृह्य उत्थितवान् । तदा वृद्धा विचित्रसेनम् उद्दिश्य – "एषा मयूरी न सामान्या, अपि तु दैवांशसम्भूता । मम अनुमतिं विना कोऽपि एतां मयूरीम् अपहर्तुं न शक्नोति । भवतः दर्शनेन मयि भवतः विषये करुणा उत्पद्यते । अतः भवान् एकं कार्यं करोतु । एतां वीणां वादयन् मेघमल्लाररागेण गीतमेकं गायतु भवान् । अहं भवते एतस्याः मयूर्याः अण्डमेकं दास्यामि" इति वदन्ती वीणाम् आनीय विचित्रसेनाय दत्तवती ।

राजा विचित्रसेनः पद्मासनस्थितौ उपविश्य वीणां वादयन् मेघमल्लाररागेण सुमधुरं गीतं गीतवान् । गीतं शृण्वती सुवर्णमयूरी आनन्देन अण्डमेकं प्रसूतवती । वृद्धा तत् अण्डं महाराजाय यच्छन्ती उक्तवती – "सप्ताहाभ्यन्तरे एतस्मात् अण्डात् सुवर्णमयूरशिशुः बहिः आगमिष्यति । किन्तु तावत्पर्यन्तम् अपि सूर्यकिरणस्पर्शः न भवेत् एतस्य अण्डस्य । अपि च एषः विषयः भवता कुत्रापि न वक्तव्यः । यदि भवान् एतं नियमं न पालयति, तर्हि एतस्य प्रभावः अपगच्छति" इति ।

महाराजः सन्तोषेण सुवर्णमयम् अण्डं स्वीकृत्य, अश्वम् आरुह्य ततः गत्वा भटैः सह राजधानीं गतवान् । ततः अण्डं कस्मिंश्चित् श्रीगन्धकण्डोले स्थापयित्वा, तं च कण्डोलं सुरक्षितं कस्मिंश्चित् गृहे स्थापितवान् ।

षट् दिनानि अतीतानि । सप्तमे दिने सायङ्कालसमये विचित्रसेनस्य द्वादशवर्षीया पुत्री रेखा सखीभिः सह क्रीडन्ती अज्ञात्वा सुवर्णाण्डयुक्तं गृहं प्रविष्टवती । तत्र सा श्रीगन्धस्य कण्डोलं दृष्ट्वा, कुतूहलेन तं कण्डोलम् उद्घाट्य दृष्टवती । अत्यन्तं प्रकाशमानं सुवर्णाण्डं दृष्ट्वा आश्चर्यचकिता रेखा सखीभ्यः दर्शयितुम् इच्छन्ती, तत् अण्डं गृहीत्वा उद्यानं गतवती । तदा सायङ्कालीनाः सूर्यकिरणाः अण्डस्य उपरि पतिताः । अपरक्षणे एव अण्डं महता शब्देन भग्नम् अभवत् । तस्मात् बहिः आगतः सुवर्णवर्णीयः सर्पः राजकुमारीं रेखां पादे दष्टवान् ।

अपरक्षणे एव राजकुमारी



आगतवान् खलु भवान् ? मया दत्तेन अण्डेन किमपि प्रयोजनं न जातं वा ? अन्यत् अण्डम् इच्छति वा भवान् ?'' इति ।

एतत् श्रुत्वा विचित्रसेनः महता कोपेन - ''रे वृद्धे ! किमपि अजानती इव मया सह भवती व्यवहरति चेत् भवतीं मारयेयम् अहम् । जागरूका भवतु । मम एकमात्रपुत्री सुवर्णमयूरीरूपेण परिवर्तिता अत्र आगतवती अस्ति । विना विरोधं मम पुत्र्याः रूपं यथापूर्वं करोतु भवती । नो चेत् भवतीं मारयिष्यामि'' इति वदन् कोषतः खड्गं निष्कासितवान् ।

तदा वृद्धा उच्चैः हसन्ती उक्तवती - ''हुं, भवान् महाशूरः खलु ! अतः एव भवतः शौर्यं मम पुरतः प्रदर्शयन् अस्ति । प्रथमं भवदीयं खड्गं कोषे स्थापयतु । एतासु तिसृषु मयूरीषु भवतः पुत्रीं भवान् अभिजानातु । यदि भवान् पुत्रीम् अभिज्ञातुं न शक्नोति, तर्हि भवान् अपि सुवर्णमयूरत्वेन परिवर्तितः भविष्यति'' इति ।

विचित्रसेनः खड्गं पुनरपि कोषे संस्थाप्य परीक्षापूर्वकं मयूरीः दृष्टवान् । तासु तिसृषु एका शिरः उन्नीय महाराजम् एव पश्यन्ती आसीत् । तस्याः नेत्राभ्याम् अश्रुबिन्दवः पतन्तः आसन् । अपरा दैन्येन शिरः अवनमय्य स्थितवती आसीत् । तस्याः नेत्राभ्याम् अपि अश्रुबिन्दवः पतन्तः आसन् ।

राजा विचित्रसेनः क्षणकालं विचिन्त्य वृद्धाम् उक्तवान् - ''शिरः उन्नीय माम् एव या

सुवर्णमयूरीरूपेण परिवर्तिता सती, ततः हयमाना कुत्रापि गतवती । एतत् दृष्ट्वा रेखायाः सख्यः भीतिम् अनुभवन्त्यः एव राजभवनम् आगत्य विषयं विचित्रसेनं निवेदितवत्यः । एतत् श्रुत्वा महाराजः अनुक्षणम् अश्वम् आरुह्य, तां मयूरीम् अनुसृतवान् । किन्तु सा मयूरी महाराजेन न प्राप्ता, अपि तु सा अरण्यं प्रविश्य, वृद्धायाः कुटीरं गतवती ।

महाराजः विचित्रसेनः भीतिम् अनुभवन् एव वृद्धायाः कुटीरं प्रविष्टवान् । तत्र तिस्रः सुवर्णमयूर्यः आसन् । ताः तिस्रः अपि दर्शनेन समानाः आसन् ।

आगतं महाराजं दृष्ट्वा वृद्धा किमपि अजानती इव पृष्टवती - ''किं भोः ! पुनः

पश्यन्ती अस्ति, सा एव मम पुत्री रेखा। शिरः अवनमय्य दैन्येन या स्थितवती अस्ति सा ग्रामप्रमुखस्य पुत्री मोहिनी'' इति।

एतत् श्रुत्वा वृद्धा आनन्देन प्रशंसापूर्वकं शिरः चालयन्ती - ''राजन् ! भवतः पुत्रीं भवान् सम्यक् एव अभिज्ञातवान्। इदानीम् एव अहं तां मयूरीं भवतः पुत्रीत्वेन परिवर्तयिष्यामि'' इति वदन्ती कमपि मन्त्रं जपन्ती मयूरीसमीपं गतवती।

तावता राजा वृद्धाम् उक्तवान् - ''अम्ब ! तिष्ठतु ! भवती मम पुत्रीं यथापूर्वं करिष्यति इति तु सन्तोषस्य विषयः एव। तेन सह ग्रामप्रमुखस्य पुत्रीम् अपि यथापूर्वं करोतु'' इति।

एतत् श्रुत्वा वृद्धा महाराजम् आश्चर्येण पश्यन्ती उक्तवती - ''अन्येषां विषये भवान् किमर्थं चिन्तयति ? भवतः पुत्रीं भवान् नयतु'' इति।

वृद्धायाः एतत् वचनम् अङ्गीकर्तुम् अनिच्छन् महाराजः - ''सः ग्रामप्रमुखः मम प्रजासु अन्यतमः अस्ति। मम पुत्र्याः अपेक्षया अपि प्रथमं तस्य पुत्र्याः रक्षणं राजधर्मः। यदि भवती एतत् न अङ्गीकरोति, तर्हि माम् अपि सुवर्णमयूररूपेण परिवर्तयतु'' इति वदन् वृद्धां नमस्कृतवान्।

एतेन अतीव सन्तुष्टा वृद्धा महाराजस्य स्कन्धे हस्तं स्थापयन्ती - ''राजन् ! भवान् स्वदयागुणेन धर्मबुद्ध्या च मां सन्तोषितवान् अस्ति। अहम् अपि भवतः देशस्य प्रजासु अन्यतमा इति कारणतः मम वचनम् अपि सदा स्मरतु भवान्। केचन प्राणिनः अरण्ये स्वतन्त्रतया विहरन्तः भवन्ति, अन्यान् च न पीडयन्ति। अपूर्वाणाम् अपि तादृशानां प्राणिनां बन्धनं मारणापेक्षया क्रूरकार्यम्। अतः भवता एतादृशस्य क्रूरकार्यस्य निषेधः करणीयः'' इति उक्त्वा सुवर्णमयूरीद्वयं राजकुमारीरूपेण, ग्रामप्रमुखस्य पुत्रीरूपेण च परिवर्तितवती।

अनन्तरं विचित्रसेनः वृद्धायै कृतज्ञतां समर्प्य ग्रामप्रमुखस्य पुत्र्या, राजकुमार्या च सह आनन्देन राजधानीं प्रतिगतवान्।





# कलायाः प्रोत्साहः

वीरराजपुरे कश्चित् भूस्वामी निवसति स्म। प्रतिदिनम् अपि प्रातःकाले तस्य उत्थानसमये एव वन्दिनः तस्य स्तुतिं कुर्वन्ति स्म। एतस्मात् भूस्वामिनः महती जामिता उत्पन्ना। अतः सः स्वप्रधानव्यवस्थापकम् आहूय उक्तवान् - "एते वन्दिनः, मनोरञ्जनकाराः, पाञ्चालिकाप्रदर्शनकाराः, नाटककाराः, सर्वे अपि अलसाः। एते मनोरञ्जनव्याजेन अलसानां संख्यां वर्धयन्तः सन्ति। अतः एतेषां निमित्तं यः मासिकव्ययः वार्षिकव्ययः च क्रियते, तत् सर्वम् इतः परं स्थगयिष्यामि अहम्। भवान् मद्वचनात् तान् कर्मकरान् वदतु - 'एषा भूस्वामिनः आज्ञा अस्ति। इतः परं सर्वेऽपि आलस्यं परित्यज्य उद्योगं कुर्वन्तः परिश्रमेण धनं सम्पाद्य जीवननिर्वहणं कुर्युः इति' इति।

एतत् श्रुत्वा प्रधानव्यवस्थापकः मन्दहासपूर्वकं सविनयम् उक्तवान् - "प्रभो! अस्माकं पोषकस्य भवतः हितदृष्ट्या अहं मम आशयं किञ्चित् वदामि। कृपया मा निराकरोतु भवान्। विनोदः जीवनस्य प्रमुखः अंशः। विनोदः अस्मभ्यं न रोचते इत्यतः उत्तमाः कलाकाराः अपि अलसाः इति कथनं न तावत् उचितम्। देशस्य अभिवृद्ध्यर्थं मनुष्यस्य परिश्रमः यावत् अनिवार्यम्, तावदेव मनसः उल्लासार्थं मनोरञ्जनम् अपि अनिवार्यम्। अतः एतेषां कलाकाराणां वेतनदानविषये पुनरपि भवान् चिन्तयतु कृपया" इति।

प्रधानव्यवस्थापकस्य हितवचनं श्रोतुम् अनिच्छन् भूस्वामी उक्तवान् - "राज्यं वीरभोग्यम् इत्युच्यते। अतः राज्यस्य अभिवृद्ध्यर्थं रक्षणार्थं च वीराः प्रोत्साहनीयाः। परिश्रमेण एव धनसम्पादनं कर्तुं शक्यम्। अतः ये परिश्रमेण कार्यं

कुर्वन्ति, तान् प्रोत्साह्य अस्माकम् आर्थिकपरिस्थितेः वर्धनं करणीयम् । जीवननिर्वहणार्थं ये सर्वथा मनोरञ्जनकार्यम् एव आश्रयन्ति, तान् न प्रोत्साहयामि अहम्'' इति ।

भूस्वामिनः एतत् वचनं श्रुत्वा किमपि उत्तरं वक्तुम् अशक्तः प्रधानव्यवस्थापकः मौनम् आश्रितवान् । भूस्वामिना उक्तः विषयः सर्वैः ज्ञातः अभवत् । अतः सर्वे अपि कलाकारान् तिरस्कारभावनया पश्यन्ति स्म । एतस्मात् वीरराजपुरे सङ्गीत-नृत्यादिकाः मनोरञ्जनकार्यक्रमाः स्थगिताः अभवन् । गीतरचयितॄणाम् अपि गौरवं न्यूनम् अभवत् । शिल्पचित्ररचनादिकं तु नामावशिष्टं जातम् । कलाकाराः नाटककाराः सर्वे निरुद्योगिनः सञ्जाताः । अपि च सर्वे अपि एतान् तिरस्कारभावनया पश्यन्ति स्म ।

एवं स्थिते कदाचित् भूस्वामिनः पत्नी अनारोग्यपीडिता अभवत् । महता औषधोपचारेण सा कथमपि प्राणापायात् रक्षिता जाता । तदा आस्थानवैद्यः भूस्वामिनम् उक्तवान् - ''प्रभो ! भवतः पत्न्याः कोऽपि रोगः नास्ति इदानीम् । मम शक्त्यनुसारं तस्याः औषधोपचारं कृतवान् अस्मि अहम् । किन्तु सा इतः परं सदा सन्तोषेण तिष्ठेत् । तदर्थं कमपि नियोजयतु भवान् । 'सन्तोषः एव यौवनम्' इति उच्यते खलु । अतः यदि सा सन्तोषेण तिष्ठति, तर्हि शीघ्रातिशीघ्रं यथापूर्वं स्वस्था भविष्यति''



इति ।

एतत् श्रुत्वा भूस्वामी चिन्ताक्रान्तः । तदा तत्रैव स्थितः भूस्वामिनः प्रधान-व्यवस्थापकः - ''कार्यभारवशात् यदा शरीरं श्रान्तं भवति, मनसः शान्तिः यदा न भवति, तादृशसमये अस्माकं पूर्वजाः सङ्गीत-नृत्यकलादिषु किञ्चित्कालं यापयन्ति स्म । भवता एतत् न इष्यते चेदपि भूस्वामिन्याः निमित्तं वा अनुमतिं ददातु कृपया । तेन सा स्वस्था भविष्यति'' इति प्रार्थितवान् ।

भूस्वामी अङ्गीकारपूर्वकं मौनं शिरः चालितवान् । केषुचित् एव दिनेषु भूस्वामिनः गृहे मनोरञ्जनकार्यक्रमाः पुनरपि आरब्धाः अभवन् । आरम्भदिनेषु यद्यपि ते कार्यक्रमाः नीरसाः इव अनुभूयन्ते

स्म, तथापि अनन्तरदिनेषु मनोरञ्जनं विना दिनानि यापयितुं न शक्तवती भूस्वामिनी। पत्न्या सह भूस्वामी अपि विनोदकार्यक्रमान् पश्यति स्म। तस्मात् प्रभावितः सः 'विनोदः अपि जीवनस्य प्रमुखम् अङ्गम्' इत्यंशम् अङ्गीकृतवान्।

कदाचित् भूस्वामिनः पत्नी सन्तोषेण उपविष्टवती आसीत्। तदा द्वौ वन्दिनौ तत्र आगतौ। भूस्वामी तिरस्कारपूर्वकं तौ दृष्टवान्। तदा तौ स्वचातुर्येण भूस्वामिनः प्रशंसां कृतवन्तौ। अनन्तरं तयोः अन्यतरः अपरम् उक्तवान् - "काचित् पितुः द्वारा पुत्रद्वारा च एकैकं पुत्रं प्रासवती। तस्याः पुत्रयोर्मध्ये युद्धम् उत्पाद्य तयोरन्यतरं मारयित्वा, अपरस्य राज्याभिषेकं कृतवतः भगवतः अभिषेकं धेनुक्षीरेण कारयतु इति भूस्वामिनं वदतु भोः" इति।

एतत् श्रुत्वा क्रुद्धः भूस्वामी प्रधानव्यवस्थापकम् उक्तवान् - "एते असम्बद्धप्रलापिनः किमपि रटन्ति। प्रथमम् इतः एतान् प्रेषयतु" इति।

तदा प्रधानव्यवस्थापकः सविनयं भूस्वामिनम् उक्तवान् - "प्रभो! एताभ्याम् इदानीम् उक्तम् अर्थहीनं न। श्रीकृष्णस्य क्षीराभिषेकः करणीयः भवता इति उक्तम् एताभ्याम्। सूर्यः यमः च पितापुत्रौ। कुन्ती सूर्यात् कर्णं, यमात् युधिष्ठिरं च प्रासवती। कुरुक्षेत्रे प्रवृत्ते युद्धे श्रीकृष्णः युधिष्ठिरस्य साहाय्यम् आचरितवान्, कर्णं च मारितवान्। तादृशस्य कृष्णस्य क्षीराभिषेकः करणीयः भवता इति एतौ उक्तवन्तौ" इति।

एतत् श्रुत्वा भूस्वामी महता सन्तोषेण - "एतत् किमपि असम्बद्धम् इति भासते चेदपि अत्रापि चमत्कारः अस्ति एव। मनोरञ्जनपूर्वकम् अपि एतादृशं चातुर्यं प्रदर्शयितुं शक्यम्। एतच्च मनसः आनन्ददायकम् अपि इति इदानीं ज्ञातं मया" इति उक्त्वा तौ वन्दिनौ पारितोषिकदानेन सम्मानितवान्।

अनन्तरकाले वीरराजपुरे पुनरपि सङ्गीतललितकलादीनां प्रोत्साहः अनुवृत्तः।





# महाभारतम्

'अर्जुनेन सह द्वन्द्वयुद्धं करणीयं चेत् भवता अपि महाराजेन भवितव्यम्' इति कृपाचार्येण यत् उक्तं, तत् श्रुत्वा कर्णः स्वमातापित्रोः नाम, स्वकुलगोत्रादिकं च वक्तुं लज्जाम् अनुभूतवान् । एतत् दृष्ट्वा दुर्योधनः कृपाचार्यम् एवम् उक्तवान् - ''ये क्षत्रियकुले जन्म प्राप्नुवन्ति, ये च शूराः भवन्ति, ये च सैन्ययुताः भवन्ति, ते महाराजपदव्यर्थं योग्याः इति शास्त्राणि वदन्ति। अर्जुनेन सह द्वन्द्वयुद्धार्थं कर्णः अनर्हः इति यत्, तस्य कारणं सः राजा न इत्येतदेव यदि स्यात्, तर्हि इदानीम् एव अहं कर्णस्य अङ्गराजत्वेन पट्टाभिषेकं कारयिष्यामि'' इति।

अनुक्षणं दुर्योधनः कर्णस्य राज्याभिषेकम् आज्ञापितवान् । पुरोहिताः समागताः । सुवर्णसिंहासनं सिद्धं जातम् । सुवर्णकलशे जलं सिद्धम् अभवत्। अक्षताः पुष्पाणि चापि सिद्धानि । अनन्तरं दुर्योधनः कर्णं सिंहासने उपवेश्य तत्रैव सर्वेषां समक्षं तस्य पट्टाभिषेकं कारितवान्।

एतदनन्तरं कर्णः दुर्योधनम् उद्दिश्य - ''महाराज ! भवान् मह्यं राज्यं दत्तवान्। एतस्य प्रत्युपकाररूपेण अहं किं करवाणि ?'' इति पृष्टवान्।

तदा दुर्योधनः उक्तवान् - ''पराक्रमशालिनः भवतः स्नेहः आवश्यकः मम'' इति।

कर्णः दुर्योधनस्य वचनम् अङ्गीकृतवान्।

कर्णस्य पट्टाभिषेककार्यक्रमं दूरतः एव पश्यन् आसीत् तस्य पिता सूतः । कर्णः महाराजपदवीं प्राप्तवान् इति अतीव सन्तुष्टः



सूतः रथात् अवतीर्य कर्णसमीपम् आगत्य तम् अभिनन्दितवान् । कर्णः पितरं नमस्कृतवान् । सूतः कर्णं प्रीत्या आलिङ्गितवान् ।

एतस्मात् कर्णः सूतपुत्रः इति विषयः सर्वैः ज्ञातः अभवत् । तदा भीमः कर्णस्य उपहासपूर्वकं - "हे सूतपुत्र ! रथचालनं विना अर्जुनेन सह कथं वा द्वन्द्वयुद्धं कर्तुं शक्नोति भवान् ? भवान् अङ्गराज्यस्य सिंहासनं केवलम् इच्छति वा ?" इति पृष्टवान् ।

एतत् श्रुत्वा कर्णः यद्यपि अतीव कुपितः, तथापि कथमपि कोपस्य निग्रहणं कुर्वन् मौनं स्थितवान् ।

तदा अनुजानां मध्ये उपविष्टः दुर्योधनः भीमम् उक्तवान् - "भीमसेन ! भवतः कथनं न युक्तम् । राजा बलशालिना प्रतिस्पर्धिना सह युद्धार्थं सिद्धः स्यात् । अतः दर्शनमात्रेण अर्जुनः अपि शूरः वीरः च इति वक्तुं केनापि अशक्यम् । अपूर्वकान्तिमान्, सहजकवच-कुण्डलवान् च एषः कर्णः न सामान्यः, अपि तु महापराक्रमी । एषः न केवलम् अङ्गराज्यम्, अपि तु समग्रां पृथ्वीम् एव पालयेत् । मया कारितः अङ्गराज्याभिषेकः येषां तृप्तिकरः नास्ति, ते मया सह द्वन्द्वयुद्धं कृत्वा जयापजयौ ज्ञातुम् अर्हन्ति" इति ।

एतत् श्रुत्वा प्रेक्षकाः सर्वे हाहाकारं कृतवन्तः । तावता सूर्यः अस्तं गतः । अतः द्वन्द्वयुद्धं न प्रवृत्तम् । केचन अर्जुनम्, अपरे केचन कर्णम्, इतरे केचन दुर्योधनं च प्रशंसन्तः ततः स्वस्वगृहं प्रतिगतवन्तः । दुर्योधनस्य तु तद्दिनम् उत्सवदिनम् इव आसीत् । यतः तावत्पर्यन्तम् अपि उरसि संलग्नः बाणः इव वीरः अर्जुनः दुर्योधनस्य विघ्नरूपेण आसीत् । किन्तु इदानीं कर्णः मित्रत्वेन प्राप्तः इत्यतः दुर्योधनस्य चिन्ता अपगता ।

कानिचन दिनानि अतीतानि । कदाचित् प्रातःकालसमये द्रोणः स्वशिष्यान् आहूय उक्तवान् - "मह्यं गुरुदक्षिणां यच्छन्तु" इति ।

गुरोः वचनं श्रुत्वा - "अस्माभिः किं दातव्यम् ? भवान् किम् इच्छति ?" इति पृष्टवन्तः द्रोणशिष्याः ।

तदा द्रोणः उक्तवान् - "धनमदान्धं तम्

अविवेकिनं द्रुपदं गृहीत्वा अत्र आनयन्तु'' इति।

गुरोः आज्ञापालनार्थं द्रोणशिष्याः रथान् सज्जीकृतवन्तः । कवचं धृत्वा खड्गं धनुर्बाणादिकं च स्वीकृतवन्तः। द्रुपदेन सह युद्धार्थं सर्वसिद्धतां कृत्वा द्रोणशिष्याः गुरुणा सह प्रस्थिताः।

तैः पाञ्चालनगरं प्राप्तप्रायम् । तदा अर्जुनः द्रोणम् उक्तवान् - ''एतेषु कोऽपि द्रुपदम् आनेतुं न शक्नोति। अतः एते स्वकार्ये वैफल्यं प्राप्य यावत् न प्रत्यागमिष्यन्ति, तावत्पर्यन्तं वयं पाण्डवाः अत्रैव तिष्ठामः। अनन्तरं गत्वा द्रुपदं गृहीत्वा आनेष्यामः वयम्'' इति।

द्रोणः अर्जुनस्य वचनम् अङ्गीकृतवान्।

दुर्योधनादयः केचन कर्णेन सह द्रुपदराजधानीं प्रस्थिताः। दुर्योधनः सहोदरैः सह राजमार्गे विकत्थनं कुर्वन् युद्धार्थम् आगच्छन् अस्ति इति वार्ता द्रुपदेन ज्ञाता। अतः सः अनुक्षणं अनुजेन सह ससैन्यं युद्धार्थं सिद्धः सन् आगतवान्।

कञ्चन कालं यावत् कौरवपक्षीयाः द्रुपदेन सह महता उत्साहेन युद्धं कृतवन्तः। किन्तु क्रमशः ते द्रुपदस्य आक्रमणं सोढुम् अशक्ताः युद्धरङ्गात् पलायनं कृत्वा द्रोणसमीपं गतवन्तः।

अनन्तरम् अर्जुनः द्रोणं नमस्कृत्य, युधिष्ठिरस्य अनुज्ञां प्राप्य भीमं स्वसैन्यस्य अधिपतित्वेन नियोजितवान् । ततः नकुलसहदेवौ स्वरथस्य चक्रयोः रक्षकत्वेन नियोज्य द्रुपदेन सह युद्धार्थं प्रस्थितः अर्जुनः।





भीमार्जुनौ द्रुपदस्य सैन्यम् एव लुण्ठितवन्तौ। अर्जुनः घोरं युद्धं कुर्वन् स्वरथं द्रुपदस्य रथस्य समीपम् नीतवान्। एतस्मात् कुपितः द्रुपदः अर्जुनस्य उपरि आक्रमणं कृतवान्। क्षणकालं यावत् द्रुपदः अदृश्यः जातः। तदा तस्य सैनिकाः हाहाकारम् अकुर्वन्।

अर्जुनः निरन्तरबाणप्रयोगेन द्रुपदस्य रथं, अश्वान् च नाशयित्वा, खड्गं गृहीत्वा द्रुपदस्य रथस्य पुरोभागं प्रति उत्प्लुतवान्, द्रुपदं गृहीतवान् च।

अत्रान्तरे भयात् पलायमानं द्रुपदसैन्यं भीम-नकुल-सहदेवैः मार्यमाणम् अर्जुनेन दृष्टम्। अतः सः उच्चस्वरेण अनुजान् आदिष्टवान् - ''द्रुपदः मया गृहीतः अस्ति। अस्माकम् आगमनोद्देशः सफलः जातः। एषः द्रुपदः अस्माकं बन्धुवर्यः अपि। शत्रुः गृहीतः चेत् युद्धं समाप्तम् इव। अतः वृथा द्रुपदसैन्यं मा नाशयन्तु'' इति।

अर्जुनः द्रुपदं बद्ध्वा द्रोणसमीपम् आनीय गुरुदक्षिणारूपेण गुरवे समर्पितवान्।

द्रोणः द्रुपदम् उक्तवान् - ''पाञ्चालराज! इदानीं भवदीयं काम्पिल्यनगरम् अस्माभिः प्राप्तम् अस्ति। इदानीं वा मां बाल्यस्नेहितत्वेन अभिज्ञातुं शक्नोति वा भवान्? भीतिः मास्तु। अहं तु परमसज्जनः। आवयोः बाल्यस्नेहः मया तु न विस्मृतः। आवयोः बाल्यस्नेहं भवन्तं स्मारयितुम् एव भवान् अत्र आनायितः मया। महाराजानां स्नेहः मह्यम् अतीव रोचते। इदानीं स्वकीयं राज्यं नास्ति भवतः। किन्तु अहं स्नेहपूर्वकम् अर्धं राज्यं भवते दास्यामि। गङ्गानद्याः दक्षिणभागे स्थितः प्रदेशः भवदीयः। उत्तरभागस्थः प्रदेशः मदीयः। आवाम् उभौ अपि मिलित्वा सन्तोषेण राज्यपालनं करवाव'' इति।

द्रुपदः स्वदोषं ज्ञातवान्। अपि च सः द्रोणस्य वचनम् अङ्गीकृत्य सदा तस्य मित्रत्वेन स्थातुं सम्मतिं प्रदर्शितवान्। एतस्मात् सन्तुष्टः द्रोणः द्रुपदं बन्धनात् मोचयित्वा तं प्रेषितवान्।

तस्मात् दिनात् द्रुपदः दक्षिणपाञ्चालं केवलं पालयति स्म। माकन्दिनगरं काम्पिल्यनगरं च द्रुपदस्य राजधानी आसीत्। सैन्यबलेन द्रोणं जेतुं सर्वथा न

शक्यते इति द्रुपदः अवगतवान् । अपि च द्रुपदस्य अपत्यं न आसीत् । अतः सः तदा तदा देशसञ्चारं कुर्वन् तपस्सिद्धिं प्राप्तवतः ऋषीन् आश्रित्य श्रद्धया भक्त्या च तेषां तपोनिधीनां सेवां करोति स्म ।

गङ्गानद्याः उत्तरे स्थितम् उत्तरपाञ्चालं द्रोणः पालयति स्म । आहिच्छत्रपुरं तस्य राजधानी आसीत् ।

वर्षम् अतीतम् । धृतराष्ट्रः युधिष्ठिरस्य युवराजपट्टाभिषेकं कारितवान् । युधिष्ठिरः धैर्यवान्, नीतिमान्, गुणवान् च आसीत् । सः सेवकैः सह अपि गौरवेण व्यवहरति स्म ।

युवराजः युधिष्ठिरः 'राज्यपालने समर्थः' इति ख्यातिं प्राप्तवान् । युधिष्ठिरः पाण्डुराजस्य अपेक्षया अपि सामर्थ्यवान् इति सर्वे तस्य प्रशंसां कुर्वन्ति स्म ।

भीमसेनः बलरामस्य शिष्यः सन् गदायुद्धे खड्गयुद्धे च नैपुण्यं सम्पादितवान् । अर्जुनः धनुर्विद्यायां निपुणः जातः । महतः आघातस्य प्राप्त्या अपि धनुः हस्तच्युतं यथा न भवेत् तथा दृढ-ग्रहणम् अभ्यस्तवान् सः । अर्जुनः महता वेगेन, अत्यन्तं सामर्थ्येन च बाणप्रयोगं करोति स्म । सर्वविधानाम् आयुधानां प्रयोगे अपि सः निपुणः आसीत् । अर्जुनस्य एतत् सामर्थ्यं द्रोणः अतीव प्रशंसति स्म ।

तदा तदा द्रोणः अर्जुनं हितवचनं वदति स्म - ''भवता सह युद्धकर्तारः ये केऽपि भवन्तु नाम । तेषां गौरवस्य कलङ्कं मा जनयतु भवान् । भवता नियमानुसारम् एव युद्धं करणीयम् । अन्यायमार्गः कदापि न





आश्रयणीयः'' इति।

अर्जुनः गुरोः द्रोणस्य प्रीतिपात्रम् आसीत्। किन्तु सः कौरवाणां शत्रुः आसीत्। अर्जुनः पित्रा पाण्डुराजेन अपि जेतुम् अशक्तान् सौवीरराजान् विमलं, दत्तमित्रं, तस्य अनुजान् च मारितवान्। सः एकाकी एव उत्तरदिशि स्थितान् महाराजान्, तत्रत्यान् दशसहस्रं जनान् च युगपत् एव जितवान्। अन्येषाम् अपि केषाञ्चित् प्रतिवेशिराज्यानां महाराजान् जित्वा तान् कौरवराज्यस्य सामन्तान् कृतवान्। सामन्तराजद्वारा प्राप्यमाणानि उपायनानि धनानि च प्रभूतं सम्पाद्य, तत्सर्वं राजधानीं हस्तिनापुरं प्रति प्रेषितवान्।

नकुलसहदेवौ अपि कौरवराज्यस्य बहून् शत्रुराजान् जित्वा प्रभूतं धनं सम्पाद्य धनागारं पूरितवन्तौ।

एवंप्रकारेण पाण्डवानां ख्यातिः सर्वदिक्षु अपि प्रसृता इति ज्ञात्वा धृतराष्ट्रः असूयाविष्टः अभवत्। ईर्ष्यया परितप्तः अभवत् सः।

एते पाण्डवाः एवमेव त्यक्तव्याः उत तेषां प्रगतेः विरोधः आचरणीयः इति निर्णेतुम् अशक्तः धृतराष्ट्रः कणिकनामकं कञ्चित् वयोवृद्धं मन्त्रिणं स्वसमस्यां विस्तरेण निवेदितवान्।

एतत् श्रुत्वा कणिकः उक्तवान् - 'येन केनापि प्रकारेण शत्रोः नाशः कृतः चेदपि न दोषाय' इति।

धृतराष्ट्रः इव तस्य पुत्रः दुर्योधनः अपि पाण्डवेभ्यः असूयति स्म। अतः सः एतद्विषये कर्णेन, शकुनिना, दुश्शासनेन सह च समालोचनं कृतवान्। पाण्डवाः केनापि प्रकारेण मारणीयाः इति निर्णीतवन्तः दुर्योधनादयः। ते एतं विषयं पितरं धृतराष्ट्रं निवेदितवन्तः।

स्वजनपक्षपाती धृतराष्ट्रः एतम् उपायं सन्तोषेण अङ्गीकृतवान्।

पाण्डवाः उपायेन वारणावतनगरं प्रति प्रेषणीयाः। तत्र लाक्षागृहे तेषां वासः कल्पनीयः। ततः लाक्षागृहस्य दाहेन ते मारणीयाः इति उपायः चिन्तितः दुर्योधनादिभिः।

अनन्तरदिनेषु धृतराष्ट्रस्य आज्ञानुसारं तस्य मन्त्रिणः एकैकशः पाण्डवानां समीपं

गत्वा वारणावतस्य सौन्दर्यं वर्णयन्ति स्म, सकृत् भवद्भिः वारणावतस्य दर्शनम् अवश्यं करणीयम् इति तान् प्रोत्साहयन्ति स्म चापि।

केषाञ्चित् दिनानाम् अनन्तरं धृतराष्ट्रः पाण्डवान् आहूय उक्तवान् - "पुत्राः! वारणावतनगरम् अतीव रमणीयम् इति सर्वे वदन्तः सन्ति। सद्यःकाले एव तत्र शिवस्य उत्सवः अपि प्रचलिष्यति। यदि भवन्तः इच्छन्ति, तर्हि मात्रा सह वारणावतं गत्वा तत्र कानिचन दिनानि सन्तोषेण स्थित्वा आगच्छन्तु" इति।

'राज्यात् बहिः प्रेषणार्थम् अयं कश्चन उपायः' इति ज्ञातवान् कुशाग्रमतिः युधिष्ठिरः। तथापि सः धृतराष्ट्रस्य वचनं सन्तोषेण अङ्गीकृतवान्।

अत्रान्तरे दुर्योधनः पुरोचननामकं शिल्पिनं रहस्ये मिलित्वा उक्तवान् - "मम पिता पाण्डवानां मारणार्थं तान् वारणावतं प्रेषयन् अस्ति। अतः भवान् पूर्वमेव वारणावतं गत्वा यानि वस्तूनि अग्निं शीघ्रम् एव गृह्णन्ति, तादृशैः लाक्षादिभिः वस्तुभिः सुन्दरं गृहमेकं निर्मातु। गृहार्थम् आवश्यकानां वस्तूनां व्यवस्थाम् अपि करोतु भवान्, येन जनाः तद्गृहस्य दर्शनेन अतीव आनन्दम् अनुभवेयुः। पाण्डवाः तत्र गत्वा तस्मिन् गृहे कानिचन दिनानि यावत् निरातङ्कं वसन्तु। ते किञ्चित् अपि सन्देहं यथा न प्राप्नुयुः, तथा व्यवस्थां करोतु भवान्। केषाञ्चित् दिनानाम् अनन्तरं कदाचित् मध्यरात्रसमये ते गाढनिद्रायां यदा भवन्ति, तदा तद्गृहस्य अग्निस्पर्शं कृत्वा भवान् प्रत्यागच्छतु। तस्मात् ते मृताः भविष्यन्ति चेत् अहं निश्चिन्तः भविष्यामि। अनन्तरम् एतस्य विशालराज्यस्य अधिपतिः भूत्वा अहं भवदिष्टम् उपकारं करिष्यामि" इति।

पुरोचनः दुर्योधनस्य वचनम् अङ्गीकृतवान्।

दुर्योधनः पुरोचनस्य वारणावतगमनार्थं रथं सज्जीकृत्य तं वारणावतं प्रेषितवान्।

पुरोचनः वारणावतं गत्वा श्रद्धया स्वकार्यम् आरब्धवान्।



# गोपालस्य सन्देहः

गोपालः मानसिकरोगेण पीडितः इति कारणतः सः नगरस्थस्य वैद्यस्य समीपं नीतः तस्य पोषकैः । वैद्यः कांश्चन मासान् यावत् गोपालस्य चिकित्सां कृतवान् । परिणामतः गोपालः स्वस्थः जातः । वैद्यः तं गृहं प्रति प्रेषितवान् ।

गोपालेन नगरात् स्वग्रामं प्रति गमनसमये मार्गे तिन्त्रिणीवृक्षस्य अधः उपविष्टः कश्चित् दृष्टः । सः गोपालम् एव विचित्रदृष्ट्या पश्यन् आसीत् । तं दृष्ट्वा गोपालः चिन्तितवान् - 'एषः इतःपूर्वं मया कुत्रापि दृष्टः अस्ति' इति ।

गोपालः तस्य समीपं गत्वा - ''स्वामिन् । भवान् इतःपूर्वं कुत्रापि दृष्टः मया इति मम स्मरणम् । प्रायः गतवर्षे प्रवृत्ते नरसिंहपुरस्थस्य शेषगिरेः पुत्रस्य विवाहे दृष्टः इति अहं चिन्तयामि । सत्यं खलु ।'' इति पृष्टवान् ।

अपरः गोपालं कोपेन पश्यन् - 'न' इति उक्तवान् ।

'एवं तर्हि रामगिरौ प्रवृत्ते धेनूनाम् उत्सवे आवां मिलितवन्तौ स्याव' इति उक्तवान् गोपालः ।

ततोऽपि कुपितः अपरः - 'न' इति उक्तवान् ।

तदा गोपालः - ''तर्हि आवां ज्येष्ठपितृव्यस्य पक्षबद्ध-कार्यक्रमसमये परस्परं मिलितवन्तौ'' इति उक्तवान् ।

एतत् श्रुत्वा क्रुद्धः अपरः - ''रे मूर्ख । अहं भवतः मातुलस्य पुत्रः सीतापतिः'' इति उक्त्वा पुनरपि गोपालं वैद्यसमीपं नीतवान् ।



# निम्बवृक्षः



काचित् महिला वैद्यस्य समीपं गत्वा तं प्रार्थितवती - ''मम पतिः प्रवासनिमित्तं सुदूरं स्थलं गन्तुम् इच्छति । किन्तु तस्य एतं प्रवासम् अहं न इच्छामि । अतः सः प्रवासात् शीघ्रातिशीघ्रम् एव प्रत्यागच्छेत् । तदर्थं कञ्चित् उपायं वदतु कृपया'' इति । वैद्यः तां सूचितवान् - ''भवती पतिं वदतु - 'प्रवासगमनसमये तिन्त्रिणीवृक्षस्य अधः विश्रान्तिं स्वीकुर्वन् गच्छतु । आगमनसमये निम्बवृक्षस्य अधः विश्रान्तिं स्वीकुर्वन् आगच्छतु' इति'' इति । पत्नी पतिम् एतम् उपायं सूचितवती । पत्न्याः सूचनानुसारम् एव प्रवासं प्रति प्रस्थितः सः तिन्त्रिणीवृक्षस्य अधः विश्रान्तिं स्वीकुर्वन् मध्येमार्गम् एव अनारोग्येण पीडितः सन् प्रतिप्रस्थितः । प्रत्यागमनसमये निम्बवृक्षस्य अधः विश्रान्तिं स्वीकुर्वन् अनारोग्यात् मुक्तः सः गृहप्राप्तिसमये पूर्णरूपेण स्वस्थः जातः । एषा कथा निम्बस्य औषधगुणं ज्ञापयति । तस्मात् तिन्त्रिणीवृक्षस्य च्छाया वायुः च अनारोग्यं, निम्बवृक्षस्य च्छाया वायुः च आरोग्यं जनयति इति स्पष्टं जातम् ।

निम्बः औषधगुणयुक्तः, कृमिनाशकः अपि । फेनकनिर्माणे दन्तफेननिर्माणे च निम्बतैलम् उपयुज्यते । इदानीन्तनेषु दिनेषु अपि ग्रामीणाः केवलं निम्बशलाकया दन्तधावनं कुर्वन्ति । निम्बस्य वायुः आरोग्यार्थम् अतीव उत्तमः । अतः एव शीतलारोगः यदा भवति, तदा गृहस्य द्वारे निम्बपर्णं बध्नन्ति । युगादिदिने निम्बपुष्पस्य खादनम् आरोग्यवर्धकम् इति जनेषु विश्वासः अस्ति । निम्बवृक्षस्य निर्यासः बुभुक्षां जनयति । निम्बवृक्षः अतीव दृढः तिक्तः च इति कारणतः पिपीलिकाः घुणकाः वा एतं वृक्षं नाशयितुं न समर्थाः । नौकानिर्माणार्थं निम्बवृक्षस्य उपयोगः अधिकतया क्रियते ।

निम्बवृक्षः उन्नतं वर्धते । चतसृषु दिक्षु अपि शाखाः भवन्ति । एतस्य लघु लघु पर्णानि भवन्ति । वर्षे एकवारं नूतनतया पल्लवितः भवति चेदपि मार्च्-एप्रिल्मासयोः एतस्य पर्णानि गुल्मवत् भवन्ति । तेषु एव दिनेषु पुष्पितः भवति निम्बः । लघ्वाकारकाणि एतस्य पुष्पाणि मधुगन्धयुतानि भवन्ति । वर्षे द्विवारं पुष्पितः भवति निम्बः । लघ्वाकारकाणाम् एतस्य फलानाम् अन्तर्भागः मधुरः भवति ।

निम्बः हिन्दीभाषया 'नीम्' इति, वङ्गालीभाषया 'नीम्गाच्' इति, तेलुगुभाषया 'वेप' इति, तमिलुभाषया 'वेम्बु' इति, मलयालभाषया 'वेप' इति, मराठिभाषया 'नीम्बाय्' इति, आङ्ग्लभाषया 'मार्गोसा' इति च उच्यते ।



# कालिदासः

महाकवेः कालिदासस्य विषयं, तं पोषितवन्तं विक्रमादित्यं च के वा न जानीयुः ? सर्वे अपि जानन्ति एव। अस्माभिः प्रतिमासं पठ्यमानायाः वेतालकथायाः त्रिविक्रमम् अपि वयं जानीमः एव।

प्राचीनभारतीयसाहित्येषु अन्यतमानां, महाकविना कालिदासेन रचितानां काव्यानां नाटकानां च श्रेष्ठताविषये कस्यापि भिन्नाभिप्रायः नास्ति । किन्तु तस्य जीवितकालविषये पण्डितानां समानः अभिप्रायः नास्ति । कालिदासः क्रि.पू. अष्टमशतके जीवितवान् इति केषाञ्चित् मतम् । इतरे केचन अभिप्रयन्ति - 'सः क्रि.पू. द्वितीयशतके आसीत्' इति । 'सः क्रि.श. चतुर्थे शतके आसीत्' इत्यपि केचन वदन्ति।

विक्रमादित्यनामानः अस्माकं देशस्य इतिहासे बहवः राजानः आसन् । तेषु द्वौ प्रसिद्धौ । विक्रमशकस्य आरम्भकर्ता राजा प्रथमः विक्रमादित्यः । एषः क्रि.पू. प्रथमशतके आसीत् । अपरः राजा द्वितीयः चन्द्रगुप्तः । सः चतुर्थ-पञ्चमशतकयोः मध्यभागे आसीत् । एतस्य विक्रमादित्यस्य आस्थानकविः एव कालिदासः इति बहूनाम् इतिहासकाराणाम् अभिप्रायः। किन्तु एतस्य पर्याप्तमात्राणि प्रमाणानि न उपलभ्यन्ते । विक्रमादित्यस्य आस्थाने कालिदासम् अविहाय नवरत्ननाम्ना प्रसिद्धिं प्राप्तवन्तः नव पण्डिताः आसन् । कालिदासः, धन्वन्तरिः, क्षपणकः, अमरसिंहः, शङ्कुः, बेतालभट्टः, घटकर्परः, वराहमिहिरः वररुचिः च एव ते नव पण्डिताः। एतानि नवरत्नानि द्वितीय-चन्द्रगुप्तस्य आस्थाने आसन् इत्यत्र प्रमाणं नास्ति । अतः एतानि नवरत्नानि तत्पूर्वतनस्य विक्रमादित्यस्य आस्थाने आसन् इति सम्भावयितुं शक्यम्।

कालिदासः उज्जयिनीनगरवासी इत्यत्र नास्ति सन्देहः। प्राचीनभारते प्रसिद्धिं गतेषु नगरेषु प्रमुखम् अन्यतमं च अस्ति उज्जयिनीनगरम्।

कालिदाससम्बन्धिनी काचित् विचित्रा कथा अपि श्रूयते।

युवकः कालिदासः विद्यावान् न आसीत्

आसीत्। विद्यावती नाम काचित् युवराज्ञी आत्मानं श्रेष्ठां मन्यमाना कांश्चन पण्डितान् अपमानितवती इति कारणतः ते पण्डिताः द्वेषं साधयितुम् इच्छन्तः कञ्चित् उपायं कृतवन्तः। विद्यालेशः अपि यस्मिन् नास्ति, तादृशं कालिदासम् आनीय, 'एषः महान् पण्डितः' इति तं परिचाय्य, तेन सह युवराज्ञ्याः विवाहं कारितवन्तः।

विवाहानन्तरं केषुचित् एव दिनेषु पण्डितैः आचरिता वञ्चना युवराज्ञ्या ज्ञाता। एतस्मात् अतीव क्रुद्धा सा पतिं कालिदासं गृहात् निष्कासितवती। एतस्मात् अतीव दुःखितः कालिकादेव्याः भक्तः कालिदासः देवालयं गतवान्, 'एतादृशम् अपमाननं सोढुम् अशक्तः अहं प्राणत्यागं करिष्यामि' इति वदन् देव्याः विग्रहस्य पुरतः विद्यमानं त्रिशूलं स्वीकर्तुम् उद्युक्तः च। अपरक्षणे एव कालिकादेवी प्रत्यक्षीभूय - 'भवान् महान् कविः भविष्यति' इति वरदानेन तम् अनुगृहीतवती। विद्याविहीनः अपि कालिदासः कालिकादेव्याः वरप्रसादात् जनादरणीयः महान् कविः सञ्जातः।

कालिदासः रघुवंश-कुमारसम्भवनामकं महाकाव्यद्वयं, विक्रमोर्वशीयम्, अभिज्ञान-शाकुन्तलम्, मालविकाग्निमित्रम् चेति त्रीणि नाटकानि, मेघदूतम्, ऋतुसंहारं चेति खण्डकाव्यद्वयं च रचितवान्।

न केवलं संस्कृतसाहित्ये अपि तु इतराभिः अपि अनेकाभिः भाषाभिः प्रकटिते भारतीयसाहित्ये अपि कालिदासस्य प्रभावः महान् अस्ति।



# भवन्तः जानन्ति वा ?

१. अस्माकं देशे निर्मितस्य सर्वप्रथमस्य अन्तरिक्षयानस्य (राकेट्) नाम किम् ? तस्य उड्डयनं कदा कुत्र प्रवृत्तम् ?
२. सर्पेषु कति प्रकाराः सन्ति ?
३. गुजरात्राज्यस्थं 'पोरबन्दर्' किमर्थं प्रसिद्धिं गतम् अस्ति ?
४. प्रथमः ब्रिटिष्प्रधानमन्त्री कः ?
५. अस्माकं देशे दीर्घः आलयमण्डपः कुत्र अस्ति ?
६. दूरदर्शकं केन कदा संशोधितम् ?
७. वृक्षशास्त्रसंशोधनार्थम् आनुकूल्यं यथा स्यात्, तथा अष्टविभागैः विभक्तः अस्ति अस्माकं देशः । ते विभागाः के ?
८. 'मेर्डोकाकप्' कस्यां क्रीडायां पारितोषिकत्वेन दीयते ?
९. अस्माकं देशे प्रथमा पञ्चवार्षिकयोजना कदा आरब्धा ?
१०. अस्माकं देशे प्रथमतया निर्मितं '३-डि' चित्रं किम् ? कदा च निर्मितम् ?
११. सा ऐरिष्महिला का, या च भारतस्वातन्त्र्यार्थं परिश्रमं कृतवती ?
१२. अस्माकं देशे 'एर्मैल्' कदा आरब्धम् ?
१३. 'फ्लैयिङ्ग् सिख्' इति केन प्रसिद्धिः प्राप्ता ?
१४. लोकसभायाः प्रथमः सभापतिः कः ?
१५. ब्रह्मसमाजस्य संस्थापकः कः ?
१६. सर्वेषु अग्निपर्वतेषु उन्नततमः कः ?
१७. अस्माकं देशस्य सुप्रसिद्धस्य 'ओपन् टु स्कै' इत्यस्य साहसोपेतपर्वतारोहणस्य नायकत्वं केन निर्व्यूढम् ?
१८. सः शाकः कः, यश्च पर्णेषु एव आहारं सङ्गृह्णाति ?

## उत्तराणि

१. 'रोहिणी' इति । तिरुवनन्तपुरसमीपस्थात् तुम्बानामकात् केन्द्रात्, १९६७ तमवर्षस्य नवम्बर्मासस्य २० तमे दिनाङ्के ।
२. २००० अपेक्षया अपि अधिकाः ।
३. महात्मगान्धिवर्यस्य जन्मस्थलं तत् ।
४. सर् राबर्ट् वाल्पोल्वर्यः ।
५. रामेश्वरे ।
६. नेदर्ल्याण्ड्देशीयेन हान्सुलिप्परोष्वर्येण १६०८ तमे वर्षे अक्टोबर्-द्वितीये दिनाङ्के ।
७. ते च विभागाः - डेक्कन्, मलबार्, सिन्धुमैदान्, गङ्गामैदान्, अस्सां, पूर्वहिमालय, पश्चिमहिमालय, अण्डमान् चेति ।
८. 'फुट्बाल्' क्रीडायाम् ।
९. १९५१ तमे वर्षे ।
१०. 'मै डियर् कुट्टिचात्तान्, (मलयालम्) । १९८४ तमे वर्षे ।
११. आनिबेसेण्ट्वर्या ।
१२. १९११ तमे वर्षे ।
१३. क्रीडापटुना मिल्कासिङ्ग्महोदयेन ।
१४. जि. वि. माव्लाङ्कर् (१९५२ तः १९६० पर्यन्तम्)
१५. राजाराममोहनरायः ।
१६. अर्जेण्टिनादेशस्थः अम्बोफालापर्वतः (६४५० मी.)
१७. सर्. एड्मण्ड्हिलरिवर्येण ।
१८. क्याबीज् ।



# स्वार्थरहितः स्नेहः

द्वादशवर्षीयः प्रतापः गृहे सर्वेषु कार्येषु अपि मातापित्रोः साहाय्यं करोति स्म । प्रतिवेशिनाम् अपि लघुलघुकार्येषु साहाय्यं करोति स्म सः । तस्य सौजन्यकारणतः सर्वे तं विशेषतः इच्छन्ति स्म । प्रतापः स्वसमानवयस्के नरेन्द्रे अधिकं स्निह्यति स्म ।

नरेन्द्रः प्रतापस्य प्रतिवेशी, धनिकपुत्रः च । नरेन्द्रस्य गृहे किमपि कार्यं न आसीत् । सः स्वविरामस्य कञ्चन कालं प्रतापेन सह यापयति स्म । नरेन्द्रः प्रतापस्य गृहं गच्छति स्म । किन्तु सः कदापि प्रतापं स्वगृहं प्रति न आह्वयति स्म ।

कदाचित् सायङ्कालसमये तद्ग्रामीणाः केचन बालाः ग्रामात् बहिः स्थिते क्रीडाङ्गणे क्रीडन्तः आसन् । किञ्चित्कलानन्तरं ते क्रीडां समाप्य तत्रैव उपविश्य जल्पनं कुर्वन्तः आसन् । तस्मिन् समये पार्श्वग्रामस्थः खाद्यवणिक् तत्र आगतवान् ।

तत्र स्थितेषु बालकेषु नरेन्द्रः प्रतापः चापि आस्ताम् । खाद्यवणिक् नूतनं किञ्चन खाद्यं कृत्वा आनीतवान् आसीत् । सर्वे तत् खाद्यं क्रीत्वा खादितवन्तः । प्रतापः अपि क्रीतवान् । किन्तु नरेन्द्रः न क्रीतवान् । एतत् दृष्ट्वा प्रतापः सहानुभूत्या नरेन्द्रं पृष्टवान् - "भवता धनं न आनीतं वा ?" इति ।

तदा नरेन्द्रः उक्तवान् - "यदा कदा वा धनस्य आवश्यकता भवेत् इति सर्वदा अहं मत्समीपे धनं स्थापयामि । किन्तु बहिः मार्गे विपणी वा यानि खाद्यानि विक्रीयन्ते, तानि न क्रेतव्यानि इति मम मात्रा अहम् आदिष्टः अस्मि" इति ।

"भवान् अत्र खाद्यं क्रीत्वा खादति चेत् गृहे केनापि न ज्ञायते खलु ! अतः भवान् अपि अत्र खाद्यं क्रीत्वा अस्माभिः सह आनन्देन खादतु" इति उक्तवान् प्रतापः ।



एतत् श्रुत्वा प्रतापः करुणया उक्तवान् - "मम समीपे धनम् अस्ति । अहं खाद्यं क्रीत्वा भवते दद्याम् । किन्तु भवतः मात्रा भवान् आदिष्टः अस्ति यत् - बहिः खाद्यं न खादनीयम् इति" इति ।

तदा नरेन्द्रः - "भवान् खाद्यं दापयति चेत् अहं खादामि । यतः तेन मम धनस्य व्ययः न भवति" इति उक्तवान् ।

प्रतापः नरेन्द्राय खाद्यं दापितवान् । नरेन्द्रः खाद्यं खादित्वा तृप्त्या प्रतापम् उक्तवान् - "भवतः कारणतः अहम् एतस्य खाद्यस्य रुचिं ज्ञातुं शक्तवान् । तदर्थम् अहं धन्यः अस्मि । भवान् एतं विषयं भवतः मातरं मा वदतु । यतः सा कदाचित् मम मातरं वदेत् अपि" इति ।

तदा नरेन्द्रः खेदेन उक्तवान् - "मम समीपे धनं कियत् अस्ति इति मम माता सम्यक् जानाति । गृहं प्रति मम गमनस्य अनुक्षणं सा मदीयं धनं गणयति" इति ।

"माता पृच्छति चेत् धनं भिक्षुकाय दत्तवान् इति वदतु । अथवा मार्गे कुत्रापि पतितम् इति वदतु । भवतः वचने मातुः विश्वासः नास्ति वा ?" इति आश्चर्येण पृष्टवान् प्रतापः ।

तदा नरेन्द्रः क्षणकालं विचिन्त्य उक्तवान् - "मम माता मयि विश्वसिति वा न वा इति तु अन्यः विषयः । किन्तु असत्यकथनं पापाय इति मम पितामही उक्तवती अस्ति । पितामह्याः वचने मम विश्वासः अस्ति" इति ।

प्रतापः एतत् अङ्गीकृतवान् । कदाचित् नरेन्द्रस्य गृहसदस्याः प्रतापम् आहूय - "प्रताप ! गृहे नरेन्द्रः एकः एव अस्ति । वयं सर्वे इदानीं बहिः गच्छन्तः स्मः । वयं एकघण्टाभ्यन्तरे प्रत्यागमिष्यामः । अस्माकम् आगमनपर्यन्तं भवान् नरेन्द्रेण सह तिष्ठतु" इति उक्त्वा बहिः गतवन्तः ।

प्रतापः कदापि नरेन्द्रस्य गृहस्य अन्तर्भागं न दृष्टवान् आसीत् । अतः सः सन्तोषेण प्रतिवेशिनां वचनम् अङ्गीकृतवान् ।

नरेन्द्रस्य गृहं वैभवेन अलङ्कृतम् आसीत् । तस्मिन् गृहे बहूनि आधुनिकवस्तूनि आसन् । बहूनां नाम एव न जानाति स्म प्रतापः । नरेन्द्रनिमित्तम् एव पृथक् प्रकोष्ठः आसीत् । नरेन्द्रस्य प्रकोष्ठे दर्पणयुता काचित्

कपाटिका आसीत् । तस्यां कपाटिकायां विविधानि क्रीडनकानि आसन् । अन्या कपाटिका पुस्तकैः पूर्णा आसीत् ।

नरेन्द्रः प्रतापम् उक्तवान् - ''गृहे बहूनि पुस्तकानि क्रीडनकानि च सन्ति इत्यतः मम समययापनं न क्लेशाय । तथापि भवता सह क्रीडितुम् अहम् अतीव इच्छामि'' इति ।

एतत् श्रुत्वा अतीव सन्तुष्टः प्रतापः - ''कपाटिकायां कीदृशानि क्रीडनकानि पुस्तकानि च सन्ति इति सकृत् अहं पश्यामि'' इति वदन् कपाटिकासमीपं गतवान् ।



अनुक्षणं नरेन्द्रः तं निवारयन् उक्तवान् - ''किमपि मा स्पृशतु भवान् । यतः अन्ये यदि एतानि वस्तूनि स्पृशन्ति, तर्हि तानि नष्टानि भवन्ति इति ज्येष्ठाः उक्तवन्तः सन्ति'' इति ।

''एवं तर्हि भवान् मम गृहम् आगत्य सर्वाणि वस्तूनि स्पृशति खलु !'' इति आश्चर्येण उक्तवान् प्रतापः ।

तदा नरेन्द्रः - ''भवतः गृहे ज्येष्ठाः मां न निवारितवन्तः खलु ! तदर्थं स्पृशामि'' इति उक्तवान् ।

अनन्तरम् उभौ अपि उपविश्य जल्पनं कृतवन्तौ । किन्तु काचित् मानसिकी वेदना प्रतापं बाधते स्म ।

पुनः कदाचित् केचन बालाः ग्रामात् बहिः विद्यमानस्य तटाकस्य तीरे उपविष्टवन्तः आसन् । तदा कश्चित् वेणुविक्रयिकः तत्र आगतवान् । वेणुविक्रयिकः रूप्यकद्वयेन एकस्य विक्रयणं कृतवान् । नरेन्द्रः अपि एकं वेणुं क्रीतवान् । प्रतापः अपि वेणुं क्रीतवान् । किन्तु तस्य समीपे केवलम् एकं रूप्यकम् आसीत् । अतः सः नरेन्द्रम् एकस्य रूप्यकस्य ऋणं पृष्टवान् ।

तदा नरेन्द्रः उक्तवान् - ''मित्रैः सह कदापि धनव्यवहारः न करणीयः । तेन मित्रत्वं नश्यति इति मम पितामहः उक्तवान् अस्ति'' इति ।

एतस्मात् प्रतापः अतीव कुपितः । यतः ततःपूर्वं न्यूनातिन्यूनं पञ्चवारं वा प्रतापेन नरेन्द्राय खाद्यं दापितम् आसीत् । एकवर्षाभ्यन्तरे नरेन्द्रनिमित्तं विंशतिः रूप्यकाणि व्ययितानि स्युः प्रतापेन । इदानीम् एकं रूप्यकम् ऋणरूपेण अपि दातुं न सिद्धः नरेन्द्रः । 'मत्तः सर्वं



स्वीकरोति एषः । किन्तु मह्यं किमपि न ददाति' इति चिन्तयन् प्रतापः कोपेन नरेन्द्रम् उक्तवान् - ''रे ! भवता उक्तं खलु - ऋणदानेन मित्रत्वं नश्यति इति । किन्तु इदानीम् ऋणस्य दानं न करोति भवान् इत्यतः आवयोः स्नेहः नश्यति । अद्य यदि मया वेणुः न क्रीयते, तर्हि अद्य आरभ्य आवां न स्नेहितौ'' इति ।

''कृपया तथा मा वदतु प्रताप ! भवतः स्नेहं विना अहं न जीवामि'' इति उक्तवान् नरेन्द्रः । किन्तु धनं तु न दत्तवान् ।

तावता रमेशनामकः कश्चित् बालकः एकं वेणुं क्रीत्वा प्रतापाय यच्छन् उक्तवान् - ''भवता बहुधा अहम् उपकृतः अस्मि । अतः कृपया एतं स्वीकरोतु'' इति ।

एतस्मात् अतीव सन्तुष्टः प्रतापः रमेशम् उद्दिश्य - ''मया कृतस्य साहाय्यस्य प्रत्युपकारः एषः इति मा चिन्तयतु भवान् । एतस्य वेणोः धनम् अहं दास्यामि । इदानीम् एतत् एकं रूप्यकं स्वीकरोतु । अन्यत् एकं रूप्यकं श्वः दास्यामि'' इति वदन् एकं रूप्यकं रमेशाय दत्तवान् । अनन्तरं सः नरेन्द्रम् उक्तवान् - ''दृष्टं खलु ! स्नेहः नाम एवं भवेत्'' इति ।

एतत् श्रुत्वा नरेन्द्रः यद्यपि क्षणकालं खिन्नः, किन्तु अपरक्षणे एव सः सन्तोषेण प्रतापम् उद्दिश्य - ''अद्य आरभ्य रमेशः अपि मम स्नेहितः एव । यतः तस्य सहकारेण भवान् वेणुं प्राप्तवान् । एवंरीत्या आवयोः स्नेहः रक्षितः अभवत् । 'यदि मया अद्य वेणुः न प्राप्यते, तर्हि आवां न स्नेहितौ' इति भवता उक्तं श्रुत्वा अहम् अतीव खिन्नः आसम् । किन्तु रमेशः मम समस्यां निवारितवान्'' इति उक्तवान् ।

तस्मात् दिनात् आरभ्य प्रतापः नरेन्द्रात् दूरे एव भवति स्म । नरेन्द्रेण सम्भाषणार्थं बहुधा प्रयत्नः कृतः चेदपि प्रतापः सम्भाषणम् अकुर्वन् औदासीन्यं प्रकटयति स्म । एतस्मात् खिन्नः नरेन्द्रः प्रतापस्य पितामहं स्वदुःखं निवेदितवान् । एतत् श्रुत्वा प्रतापस्य पितामहः नरेन्द्रं ततः सम्प्रेष्य, प्रतापम् आहूय, तस्मात् प्रवृत्तं सर्वं ज्ञात्वा उक्तवान् - ''अद्यपर्यन्तम् अपि मया चिन्तितम् आसीत् - 'भवन्तौ उत्तमस्नेहितौ' इति । किन्तु भवान् महान् स्वार्थी'' इति ।

'स्वार्थी अहम् उत नरेन्द्रः ?' इति आश्चर्येण पृष्टवान् प्रतापः ।

तदा प्रतापस्य पितामहः उक्तवान् - ''नरेन्द्रः भवतः स्नेहितः । कस्मिंश्चित् सन्दर्भे भवान् तस्य साहाय्यं कृतवान् इति तु भवतः सौजन्यम् । किन्तु तस्य प्रतिफलापेक्षाकरणं स्वार्थबुद्धिः एव । अस्मिन् अल्पे वयसि एव स्वार्थमनोभावः न उचितः'' इति ।

एतत् श्रुत्वा प्रतापः कोपेन - ''एवं तर्हि मम कष्टकाले अपि तेन साहाय्यं न करणीयं वा ?'' इति पृष्टवान् ।

तदा पितामहः उक्तवान् - ''यदि सः इच्छति, तर्हि साहाय्यं करोति । स्नेहः दानयोग्यं स्वीकरणयोग्यं वा वस्तु न । यदि स्नेहस्य स्वीकरणं वा दानं चिन्तयति भवान् तर्हि, तत् वाणिज्यं स्यात्'' इति ।

''एवं तर्हि अत्र नरेन्द्रस्य दोषः नास्ति एव वा ?'' इति पृष्टवान् प्रतापः ।

तदा प्रतापस्य पितामहः - ''दोषः भवतः एव, न तु नरेन्द्रस्य । यतः भवता कृतं साहाय्यं सर्वं नरेन्द्रस्य सन्तोषार्थम् । एतस्य प्रत्युपकाररूपेण भवतः तोषणकार्यं नरेन्द्रेण करणीयम् इति भवतः आशयः अनुचितः खलु !'' इति पृष्टवान् ।

एतत् श्रुत्वा प्रतापः पृष्टवान् - ''भवता उक्तं सर्वं समीचीनम् एव । किन्तु एतादृशेन अप्रयोजकेन स्नेहेन मम किं प्रयोजनम् ?'' इति ।

तदा प्रतापस्य पितामहः उक्तवान् - ''प्रयोजनम् अस्ति एव । प्रतिफलापेक्षां विना स्नेहकरणं कथम् इति नरेन्द्रः भवन्तं बोधितवान् । भवान् एतेन अपि नूतनं पाठं ज्ञातुम् असमर्थः चेत्, तदा नरेन्द्रविषयकः भवतः स्नेहः एव अप्रयोजकः स्यात्'' इति ।

पितामहस्य वचनात् तस्य आशयं ज्ञातवान् प्रतापः । तद्दिनादारभ्य सः प्रतिफलापेक्षां विना एव सर्वैः सह स्नेहव्यवहारम् आरब्धवान् । पितामहेन प्रतापम् उद्दिश्य बोधितं हितवचनं ज्ञात्वा नरेन्द्रः अपि स्वव्यवहारेण लज्जितः अभवत् । अनन्तरकाले नरेन्द्रः अपि स्वस्वभावं परिवर्त्य प्रतापस्य स्नेहं सम्पादितवान् ।





# पित्रार्जितस्य विभागः

रामदुर्गसमीपस्थे कस्मिंश्चित् ग्रामे कश्चित् भूस्वामी आसीत् । सः तं ग्रामं परितः ये नव ग्रामाः आसन्, तेषां सर्वेषां ग्रामाणां न्यायाधिकारी आसीत् । तस्य चत्वारः पुत्राः आसन् । तेषु प्रथमः ग्रामप्रमुखः आसीत् । द्वितीयः पशुपालनकार्यं निर्वहति स्म । तृतीयः कृषिकार्यस्य व्यवस्थां पश्यति स्म । चतुर्थः पुत्रः अध्ययने, देवकार्यादिषु, धर्मकार्येषु च आसक्तः आसीत् ।

कानिचन वर्षाणि अतीतानि । भूस्वामी वार्धक्येन शय्याम् आश्रितवान् । सः कदाचित् स्वमरणम् आसन्नम् इति ज्ञात्वा पुत्रान् समीपम् आहूय उक्तवान् - "पुत्राः ! एतावत्पर्यन्तम् अपि अस्माभिः अन्येषां व्यवहारम् अधिकृत्य न्यायनिर्णयः कृतः । किन्तु अस्माकं व्यवहारः कदापि अन्येषां समीपं न्यायनिर्णयार्थं न नीतः । इतःपरम् अपि तादृशपरिस्थितिः न आगच्छेत् इति मम आशयः । मम तु मरणकालः सन्निहितः अस्ति । भवन्तः चत्वारः अपि इदानीं मम मञ्चस्य चतुर्णां पादानां समीपे तिष्ठन्तु । भवद्भिः यत्र स्थीयते, तत्र मम मरणानन्तरं खननं कुर्वन्तु । भूमेः विभागसमये कदापि कलहं मा कुर्वन्तु भवन्तः" इति ।

चत्वारः अपि पुत्राः पितुः मञ्चस्य चतुर्षु कोणेषु स्थितवन्तः ।

तदा भूस्वामी पुनः - "मया क्रियमाणम् अन्यत् किमपि अस्ति वा ?" इति पृष्टवान् ।

'न' इति यदा पुत्रैः उक्तं, तदा नारायणनामस्मरणं कुर्वन् भूस्वामी प्राणान् त्यक्तवान् ।

पितुः अन्त्यक्रियादिकं समाप्य चत्वारः सहोदराः अपि पितुः वचनानुसारं पितुः मञ्चस्य चतुर्षु कोणेषु खननं कृतवन्तः ।

ज्येष्ठेन यत्र खननं कृतं, तत्र धान्यस्य

कणाः लब्धाः । द्वितीयेन गोमयं प्राप्तम् । तृतीयेन यत्र खननं कृतं, तत्र मृत्तिकां विना अन्यत् किमपि न आसीत् । चतुर्थेन तु रजतं सुवर्णं च प्राप्तम् । एतत् दृष्ट्वा अन्ये त्रयः अतीव कुपिताः ।

ते त्रयः अपि असूयया परस्परं सम्भाषणं कुर्वन्ति स्म - "अन्तिमः पुत्रः इति अभिमानेन पिता कनिष्ठपुत्राय रजतं सुवर्णं च दत्तवान् अस्ति" इति ।

एतत् श्रुत्वा अन्तिमः शान्तस्वरेण उक्तवान् - "भवन्तः सर्वे अपि स्वस्य इच्छायाः अनुसारम् एव मञ्चस्य पादसमीपे स्थितवन्तः । भवद्भिः सर्वैः अपि यदा स्थितम्, तदनन्तरम् एव अवशिष्टस्य पादस्य समीपे अहम् स्थितवान् । अत्र मम दोषः कोऽपि नास्ति" इति ।

एतत् श्रुत्वा अन्ये सहोदराः कोपेन उक्तवन्तः - "एतत् अङ्गीकर्तुं न सिद्धाः वयम् । एषा समस्या रामदुर्गस्य न्यायालये एव परिष्कृता भवेत्" इति ।

तदनुसारं ते पितुः अन्तिमम् आशयम् अपि तृणीकृत्य रामदुर्गस्य न्यायालयं गत्वा स्वसमस्यां न्यायाधिकारिणं निवेदितवन्तः ।

न्यायाधिकारी प्रवृत्तं सर्वं श्रुत्वा उक्तवान् - "पित्रार्जितं किं किम् अस्ति इति विस्तरेण वदन्तु भवन्तः" इति ।

तदा ते उक्तवन्तः - "पितुः क्षेत्रं, गावः, धान्यवाणिज्यं, रजतं, सुवर्णं च अस्ति" इति ।

"एवं तर्हि तानि एव भवतां पिता पुत्रेभ्यः सम्यक् विभज्य दत्तवान् अस्ति । धान्यवाणिज्यं ज्येष्ठपुत्रस्य, पशुपालनं द्वितीयस्य, क्षेत्रं तृतीयस्य, सुवर्णं रजतं च चतुर्थस्य । एवमेव विभागं कृत्वा सुखेन जीवनं यापयन्तु भवन्तः" इति उक्तवान् न्यायाधिकारी ।

न्यायाधिकारिणः एतेन निर्णयेन त्रयः सहोदराः अपि अतीव सन्तुष्टाः, आश्चर्यचकिताः च । पिता कस्मिन् अपि पुत्रे अन्याय्यं न आचरितवान् इति ज्ञात्वा ते अतीव सन्तुष्टाः । ततः स्वग्रामं गत्वा सर्वे सम्भूय सुखेन जीवनं यापितवन्तः ।



# श्वः आरभ्य शिबिरम् आगच्छामि

सुरेशः - अम्ब ! शीघ्रम् उपाहारं ददातु । मम विलम्बः अभवत् ।

Mother, let me have my breakfast soon. It is already late.

नलिनी - वत्स ! किमर्थम् एतावती त्वरा ?

Why ? What is the hurry ?

सु - मया शीघ्रं गन्तव्यम् अम्ब ।

I have to go a bit early, mother.

न - भवतु । उपाहारं स्वीकरोतु । सावधानं खादतु । कुत्र गन्तव्यं भवता इदानीम् ?

All right. Take this. Eat Slowly. Where have you to go ?

सु - संस्कृतसम्भाषणशिबिरं गन्तव्यम् ।

I have to go to the Sanskrit Conversation Camp.

न - संस्कृतसम्भाषणशिबिरं वा ? कुत्र प्रचलति तत् ?

Sanskrit Conversation Camp ! Where is it going on ?

सु - अत्रैव समीपे आञ्जनेयदेवालये संस्कृतशिबिरं प्रचलति ।

It has been organised at the Anjaneya Temple nearby.

न - एवं वा ? कति दिनानि शिबिरं प्रचलति ?

Is it ? How long will it go on ?

सु - अद्य आरभ्य दश दिनानि प्रचलति । वयोभेदः नास्ति । सर्वैः अपि आगन्तुं शक्यते इति मम स्नेहितः गिरीशः उक्तवान् अस्ति । भवती अपि आगच्छतु अम्ब !

For 10 days from today. There is no age limit. My friend Girish said all are welcome. You, too, are come, along mother.

न - अद्य मम बहु कार्यम् अस्ति । श्वः आरभ्य अहम् अपि संस्कृतशिबिरम् आगच्छामि ।

I have a lot of work to do today. I shall go with you from tomorrow.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनुज्ञा - Permission

आसन्ना - Near

उपायनम् - Gift

कण्डोलः - Basket

कुटीरम् - Hut

कोणः - Corner

क्रीडकम् - Toy

खननम् - Digging

गर्तः - Pit

गुल्मः - Bush

गोमयम् - Cow dung

चञ्चू - Beak

जालम् - Net

तडागः - Lake

तिन्त्रिणी - Tamarind

तैलपः - Cockroach

दन्तफेनः - Toothpaste

दर्पणः - Mirror

दष्टवान् - Bit (V)

दुर्गम् - Fort

निखननम् - Burying

निम्बवृक्षः - Neem Tree

पटगृहम् - Tent

परिखा - Ditch

पिच्छम् - Feather

पितृव्यः - Father's brother

पुत्तिका - White ant

पेषणम् - Grinding

फेनकम् - Soap

बडिशम् - Fish-hook

भुशुण्डिः - Gun

मल्लः - Wrestler

मातुलः - Maternal Uncle

युगपत् - Together

लाक्षा - Lac

वन्दी - Flatterer

विकत्थनम् - Boasting

वृत्तिः - Fence

वेणुः - Flute

शीतला - Smallpox

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां जून् - १९९५ मासे प्रकटयिष्यामः ।



Shanbagavalli



Sundaramurthy

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका संमपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

### 'फेब्रवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

**प्रथमचित्रम् - नटराज्ञी भवितुम् इच्छन्ती ।**

**द्वितीयचित्रम् - अनुगृह्यते अर्धनारीश्वरेण ॥**

प्रेषकः - डा. वि. रामब्रह्मम्, भौतशास्त्रविभागः, सर्वकारीयमहाविद्यालयः थानम् - ५३३ ४६४




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# ऐसा भी होता है!

शाम का वक्त था. सोनू स्कूल से घर लौट रहा था. अचानक तेज हवा चलने लगी... और एक उड़न-तश्तरी आसमान से उतरी और ठीक सोनू के पास आकर रुक गई...

उसमें से एक बौना-सा जीव निकला और सोनू से बोला...

"मुझसे दोस्ती करोगे?"

"त... त... तुम हो कौन?"

"मैं मंगल ग्रह से आया हूं, दोस्ती करने."

सोनू के मुंह से निकल गया

"ठीक है"

"तो ये लो हमारी दोस्ती की निशानी. मेरी मनपसंद चीज जो तुम्हारी ही धरती का जादू है."

"जादू?"

"बिल्कुल. न गुठली न छिलका आम का खास मजा"

"आम? ऐसी खूबी में! जल्दी दो."

"तो दोस्त, खोलो मुंह और करो आंखें बंद टाइट और ये लो मेरी प्यारी मैंगो बाइट"













पारले मैंगो बाइट

everest/93/PP/217-hn